पतितस्य समाप्तपुनराप्ततादोषस्यापि निरासो जातः। नन्वेवमपि तस्मा अमितमहिम्ने पुरभिदे नम इत्येकस्य तस्मै कस्मैचिन्नम इत्यपरस्य च द्वयो र्वाक्ययोश्चतुर्थचरणस्य फलतः पर्यवसानादस्मिन् व्याख्याने वाक्यभेदापत्तिः सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यत इत्यभियुक्तोक्त्या तस्य दोषावहत्वादिति चेन्न। भिन्नत्वेऽपि वाक्ययोः परस्परसाकाङ्क्षत्वे तस्याभियुक्ततरैरभिप्रेतत्वात्। अत्र नमःपदमेव प्रथमान्तमतस्तदर्थमुख्यविशेष्यताक एव चतुर्थचरणे वाक्यार्थबोधः स्यादन्यस्य प्रथमान्तपदस्याभावात्। अवशिष्टचरणत्रये च गुणातीतत्वादितत्तद्विशेषणैर्यत्पदार्थस्य नित्यज्ञानवत एव शाब्दबोधे मुख्यविशेष्यतया भानमभिप्रेतम्। स्वीयापकर्षप्रकारकबोधहेतुरुच्चारयितुर्व्यापारविशेष एव नमःपदस्यार्थः। पुरभिदे इति चतुर्थीविभक्तेश्चावधिमत्त्वमर्थस्तस्य च निरूपितत्वसम्बन्धेन प्रकृत्यर्थान्वितस्य प्रोक्तनमःपदार्थैकदेशेऽपकर्षेऽन्वयात् पुरभिन्निरूपितावधिमदपकर्षप्रकारकबोधहेतुर्मणिकारीया व्यापार इत्याकारकः शाब्दबोधो लभ्यते।

अन्वीक्षानयमाकलय्य गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम्।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥ २ ॥

प्रमाणतत्त्वप्रतिपादकेभ्योऽन्यदीयग्रन्थेभ्यः स्वीयग्रन्थस्य वैशिष्ट्यं प्रतिपिपादयिषुर्मणिकार आह 'अन्वीक्षानयमाकलय्ये'त्यादि। गङ्गेशः श्रीतत्त्वचिन्तामणिं तनुते इत्यन्वयः। श्रीति पदं प्राशस्त्यद्योतकं न तु ग्रन्थनामान्तर्गतं तत्त्वचिन्तामणीत्यस्यैव ग्रन्थनामत्वेन प्रसिद्धत्वात्। गङ्गाया ईशः सागरो यथा रत्नभूतं मण्यादिकं तनुते तथायमपि ग्रन्थकारो गङ्गेशनामा मैथिलस्तत्त्वात्मकं चिन्तामणिं तनुत इति गङ्गेशपदेन मणिपदेन चोपमालङ्कारो द्योतित इति बोध्यम्। गङ्गायाः सरित ईशः सागरो यथा रत्नानि तनुते तथायमपि प्रमाणतत्त्वात्मकं मणिं रत्नं तनुत इत्यार्थिकोपमालङ्कारो ज्ञापितः। गङ्गेशनामा ग्रन्थकारः किम्भूत इत्याकाङ्क्षायामाह 'सिद्धान्तदीक्षागुरु'रिति। सिद्धस्येदन्त्वादिसामान्यधर्मप्रकारेणाभ्यनुज्ञायमानस्य अन्त इत्थम्भावव्यवस्था सिद्धान्तः। तथा च सामान्यतो विशेषतश्च निश्चीयमानोऽर्थः सिद्धान्त इति भावः। निरुक्तस्य सिद्धान्तस्य या दीक्षोपदेशस्तस्य गुरुः कर्ता। किमाश्रितोऽसौ सिद्धान्तो यस्य दीक्षागुरुर्गङ्गेश इत्याकाङ्क्षामामाह 'तन्त्र' इति।

तन्त्रं शास्त्रं तस्मिन् यः सिद्धान्तस्तस्य दीक्षागुरुः। तथा च शास्त्राश्रितस्य सिद्धान्तस्योपदेशको गङ्गेश इति भावार्थः। शास्त्राश्रितस्य सिद्धान्तस्य पूर्वाचार्यैर्बहुधोपदेशादनर्थकोऽयमुपदेशोद्यमो नवीनस्येत्यत आह 'दोषगणेन दुर्गमतर' इति। तथाच दोषारोपेण नास्तिकैः कदर्थितत्वाच्छास्त्रस्येदानीं नवीनया रीत्या सिद्धान्तोपदेशस्य सर्वथापेक्षितत्वेन न गङ्गेशस्य तादृगुद्यमो निष्फल इति भावार्थः। नवीनैरुपदिष्टे सिद्धान्ते कथं नानास्थेत्याशङ्कायामाह 'अन्वीक्षे' त्यादि। भगवद्भाष्यकारीयनिरुक्त्यनुसारेणान्वीक्षापदं यद्यप्यनुमित्यात्मकमेवार्थं समर्पयति तथापि तदिह तत्प्रतिपादकविद्यारूपे एवार्थे ग्राह्यमन्यथा नयपदार्थासङ्गतेः। तथाचान्वीक्षानयमित्यस्यान्वीक्षिकशास्त्रस्य मतमित्यर्थो बोध्यः। 'गुरुभिर्ज्ञात्वे'त्युक्तिः स्वीयाकलने परेषामास्थोत्पादनाय। अन्यथा ग्रन्थाध्ययने प्रेक्षावतामप्रवृत्तिर्वा स्यात्। 'चिन्तादिव्यविलोचनेन चे'त्याद्युक्तिर्ग्रन्थकारस्य स्वस्मिन्नपक्षपातं सूचयति। तथाच पक्षपातित्वराहित्यादपि ग्रन्थकारीयः सिद्धान्तो नानास्थास्पदमिति भावार्थः।

यतो मणेः पण्डितमण्डनक्रिया
प्रचण्डपाषण्डतमस्तिरस्क्रिया।
विपक्षपक्षे न विचारचातुरी
न च स्वसिद्धान्तवचो दरिद्रता॥ ३॥

ग्रन्थस्यास्य कथं तत्त्वचिन्तामणिरित्यभिधेयमित्याकाङ्क्षायां मणिसादृश्यप्रतिपादनेनोत्तरमारचयति 'यतो मणे'रित्यादि। यतः पण्डितमण्डनक्रियाद्यात्मकानि मणिसादृश्यान्यत्र ग्रन्थे सन्ति अतोऽस्य 'तत्त्वचिन्तामणि'रित्यभिधेयं युक्तमेवेति भावार्थः। पण्डितमण्डनक्रियात्मकस्य मणिधर्मस्य स्वग्रन्थे सत्त्वान्मणिसादृश्येन ग्रन्थस्यापि तत्त्वचिन्तामणिनाम्ना समाख्यानं युक्तमदेवेत्यर्थः। अपरमपि मणिसादृश्यं ग्रन्थस्य दर्शयति 'प्रचण्डपाषण्डे'त्यादि। मणिर्यथा प्रचण्डपाषण्डात्मकानां तमसां तिरस्क्रियां करोति तथा ग्रन्थोऽपि प्रचण्डपाषण्डतमोरूपस्य नास्तिक्यवादस्य तिरस्क्रियां विदधातीति मणिसादृश्येन तन्नाम्ना तस्याभिधानमुचितमेवेति भावार्थः। अन्यदपि तदाह 'विपक्षपक्ष'इत्यादि। मणौ सत्त्वे तदीयप्रभया यथा विपक्षाणां चौरादीनां विचरणचातुर्यं न घटते तथा तत्त्वचिन्तामण्यर्थज्ञानसत्त्वेऽपि विरोधिपक्षाणां विचारे चातुर्यं न भवतीति ग्रन्थस्य मणिसादृश्यं बोध्यम्। भिन्नमपि तत्प्रतिपादयति 'न चे'त्यादि।

तथाहि मणिस्वामिनो यथा स्वस्य धनस्य सिद्धान्तवचसोऽवसानबोधक-वाक्यस्यादरिद्रता न भवति तादृशकथनस्याभाव एव भवतीति यावत् तथा चिन्तमणिस्वामिनोऽपि स्वीयसिद्धान्तवाक्यस्य दरिद्रता अभावः कदापि न भवतीति ग्रन्थस्य चतुर्धा मणिसादृश्यं बोध्यम्। अत्रान्तिमचरणस्य मणिपक्षीय-व्याख्यायां स्वसिद्धान्तवचोऽदरिद्रतेत्यकारस्य प्रश्लेषो बोध्यः। इति शम्।

———

॥ श्रीः ॥

इह खलु सकलशिष्टैकवाक्यतयाभिमतकर्मारम्भसमये तत्-समाप्तिकामा मङ्गलमाचरन्ति । तत्र यद्यपि मङ्गलस्य कारणता नान्वयव्यतिरेकगम्या विनापि मङ्गलं प्रमत्तानुष्ठितसमाप्तेः । न च

अनन्ताख्यमपादानं नामं नामं 'प्रभा'-ह्वयाम् ।
मणिमङ्गलवादस्य समीक्षां तनुते मुदा ॥

कर्मारम्भाव्यवहितपूर्वकालीनत्वेन मङ्गलाचरणं समर्थयितुं प्रथमतो मीमांसक-मतमुपस्थापयति इह **खल्वित्यादिना इति सम्प्रदाय** इत्यन्तेन ग्रन्थेन ग्रन्थकारः। आधुनिकस्यैव मङ्गलाचरणस्य समर्थने ग्रन्थस्य परमतात्पर्यं प्रकृतसमर्थनस्य प्राचीनमङ्गलानुष्ठानमूलकत्वात् । इहेति । अस्मिन् संसार इति तदर्थः । गमकत्वाभावात् समासान्तर्गतशिष्टपदार्थे तदर्थस्यान्वयासम्भवेन समाप्तिकाम-पुरुषद्वाराचरणक्रियायामन्वयो बोध्यः । अथवा इति दृश्यत इति वाक्यान्तर-मध्याहृत्य दृश्धात्वर्थेऽन्वय एष्टव्यः । **खल्विति** वाक्यसौन्दर्ये । **सकलशिष्टैक-वाक्यतयेति** । सकलशिष्टसम्मतत्वेनेति तदर्थः । अत्र तृतीया विशेषणे । वैशिष्ट्यात्मकतदर्थस्य च आचरन्तीति चर्धात्वर्थेऽन्वयो ज्ञेयः । तेन च मङ्गल-कर्मताकाचरणस्य सकलशिष्टसम्मतत्वलाभात् तत्र भ्रममूलकत्वाशङ्का निराकृता भवति । रहस्यकारास्तु समाप्तिहेतुत्वविशिष्टे मङ्गलपदार्थे तृतीयान्तार्थ-स्यान्वयमाचचक्षिरे । तेन च मङ्गलगतसमाप्तिकारणत्वस्याभ्रान्तत्वलाभा-न्मङ्गलाचरणस्य सफलत्वेन प्रामाण्यं सिध्यतीति तेषामभिप्रायः । एतन्नास्मभ्यं रोचते । मङ्गलगतसमाप्तिकारणत्वस्योक्तमूलवाक्यादर्थतः कथञ्चिल्लाभेऽपि शब्दतोऽलाभात् तेन तृतीयान्तपदार्थस्यान्वयासम्भवात् पदार्थः पदार्थेनैवान्वेतीति नियमात् ।

अथ मङ्गलाचरणस्य सकलशिष्टसम्मतत्वेऽपि जनानां तदाचरणप्रवृत्तिः कथमुपपद्येत, अन्यसम्मतज्ञानस्यान्यकर्तृकप्रवृत्तावनुपयोगादिति चेन्न । शिष्टानु-वर्तिनामन्येषामपि शिष्टसम्मतत्वज्ञानेन तत्र प्रवृत्तिसम्भवात् । पूर्वाचार्य-सम्मतेऽर्थे तदनुयायिनामनुरागस्य प्रसिद्धत्वादिति ध्येयम् । ननु यस्मिन् कस्मिन् वा काले लोकाः शिष्टानुवर्तिनो मङ्गलमाचरन्तीति चेन्नेत्याह । **अभिमत-**

**कर्मारम्भसमय** इति । अभिमतकर्मारम्भादव्यवहितपूर्वकाल इति तदर्थः। वृत्तित्वं सप्तम्यर्थोऽन्वयश्च तस्य चर्धात्वर्थे। एतेन तत्कालवृत्तिमङ्गलाचरणे शिष्टसम्मतत्वलाभात् तत्काल एव शिष्टानुवर्तिनां मङ्गलाचरणं स्यान्नान्यस्मिन् काल इत्युपपद्यते। अमुमुक्षुप्रवृत्तेः कामनाधीनत्वनियमाज्जनानां मङ्गलाचरणप्रवृत्तौ सा कीदृशीत्याकाङ्क्षायामाह। **तत्समाप्तिकामा** इति। तत्कामनोद्देश्यत्वेन समाप्तिमवलम्बत इति कथं ज्ञातुं शक्यमिति चेन्न। शिष्टकामनायाः समाप्त्यालम्बनत्वात्। ननु शिष्टकामनाः समाप्तिमालम्बन्त इत्येव कथं निर्णतुं शक्यमिति चेन्न। विषयान्तरस्यानुपस्थित्या समाप्त्यर्थं कर्माण्यारभ्यन्त इति सर्वप्रसिद्धचा च मङ्गलानुष्ठानप्रवृत्त्युपयोगिशिष्टकामनायाः समाप्त्युद्देश्यकत्वेनावश्यं परिशेषादिति भावः।

पूर्वोक्तग्रन्थात् समाप्तिसाधनत्वेन मङ्गलानुष्ठानं सकलशिष्टसम्मतमित्यर्थोऽर्थात् प्राप्तः। तत्र मीमांसकमतानुसारेण तं द्रढयितुं प्रथमतः पूर्वपक्षमारचयति। **तत्र यद्यपीत्यादि**। तत्रेति तत्पदार्थोऽनुष्ठानम्। निमित्तत्वञ्च सप्तम्यर्थः। कारणतापदञ्च लक्षणया समाप्तिकारणतामुपस्थापयति। तथा चानुष्ठाननिमित्तत्वरूपसप्तम्यन्तार्थस्य कारणतापदार्थे समाप्तिकारणतायां, मङ्गलस्येति षठ्यन्तार्थस्य च मङ्गलसम्बन्धित्वस्यान्वयव्यतिरेकगम्येत्यग्रिमान्वयव्यतिरेकपदार्थेऽन्वयान्मङ्गलानुष्ठानप्रयोजकीभूता समाप्तिकारणता यद्यपि न मङ्गलसम्बन्ध्यन्वयव्यतिरेकगम्येत्यर्थो लभ्यते। न च तत्र यद्यपि मङ्गलस्य कारणता नान्वयव्यतिरेकगम्येति षष्ठ्यन्तपदार्थस्य तत्सन्निहितकारणतापदार्थेऽन्वयसम्भवात् तं परित्यज्य व्यवहितान्वयव्यतिरेकपदार्थेऽन्वयोऽनुचित इति वाच्यं, तथापि विचार्यमाणस्य मङ्गलगतसमाप्तिकारणत्वस्येदानीमप्यसिद्धत्वात् तत्र षष्ठ्यन्तार्थान्वये वाक्यार्थाप्रसिद्धेः। मङ्गलान्वयव्यतिरेकगम्यत्वञ्चात्र मङ्गलान्वयव्यतिरेकज्ञानजन्यो यो मङ्गलवृत्तित्वप्रकारकप्रत्यक्षनिश्चयस्तद्विषयत्वरूपं बोध्यम्। तथाच समाप्तिकारणत्वं न मङ्गलान्वयव्यतिरेकज्ञानजन्यमङ्गलवृत्तित्वप्रकारकप्रत्यक्षनिश्चयविषय इत्येवं पक्षसाध्ययोर्निर्देशो बोध्यः। यद्यप्यत्र साध्ये जन्यत्वान्तमव्यावर्तकं तथापि तादृशाखण्डाभावस्य साधने तात्पर्यान्न व्यर्थत्वमाशङ्कनीयमिति भावार्थः। समाप्तिकारणतायां प्रदर्शितसाध्यसाधने किं लिङ्गमित्याकाङ्क्षायामाह। **मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेरिति**। तेन च यथाश्रुति मङ्गलाभावविशिष्टं यत् प्रमत्तानुष्ठितं कर्म तस्य समाप्तिलिङ्गत्वेन प्राप्यते। तच्च न सम्भवति। समाप्तिकारणतापक्षे तस्य विरहेण स्वरूपासिद्धत्वात्। अतो मङ्गलव्यतिरेकव्यभिचारित्वप्रकारकज्ञानविषयसमाप्तिकारणतात्वस्य लिङ्गत्वं बोध्यं तत्रैव तद्ग्रन्थस्य तात्पर्यात्। एवञ्च न

तत्र जन्मान्तरीयतत्कल्पनमन्योन्याश्रयाल्लोकावगतकारणेनान्यथासिद्धेश्च ।

स्वरूपासिद्धिः समाप्तिकारणत्वरूपपक्षे तस्य 'विद्यमानत्वात् । अन्वयव्यतिरेकसहचारयोर्ज्ञानं कारणताप्रत्यक्षे कारणमित्येवं मन्यमानेनैव ग्रन्थकृता तदनुमानमुपस्थापितम् । तच्च न सम्भवति कारणताशरीरप्रविष्टयोरनन्यथासिद्धत्वव्यापकत्वयोः सहचाराघटितत्वादिति चेन्न । तादृशविशिष्टकारणताप्रत्यक्षे सहचारग्रहस्य हेतुताया अन्वयव्यतिरेकाभ्यां प्रसिद्धेरिति ध्येयम् । एवञ्च समाप्तिकारणत्वं न मङ्गलान्वयव्यतिरेकज्ञानजन्यमङ्गलवृत्तित्वप्रकारकप्रत्यक्षनिश्चयविषयो मङ्गलव्यतिरेकव्यभिचारित्वप्रकारकज्ञानविषयसमाप्तिनिरूपितकारणतात्वात् कर्तृनिष्ठसमाप्तिकारणतावदित्येवं प्रयोगो बोध्यः ।

दर्पणकारास्तु कारणत्वं नानन्यथासिद्धत्वविशिष्टनियतपूर्ववर्तित्वरूपमनन्यथासिद्धत्वघटकनानाऽयोग्यपदार्थघटितत्वेन तादृशस्य प्रत्यक्षायोग्यत्वप्रसङ्गात् । न च सामान्याभावप्रत्यक्षे प्रतियोगितावच्छेदकधर्मप्रकारेण यत्किञ्चित्प्रतियोगिनो योग्यत्वस्यैवापेक्षितत्वेनान्यथासिद्धान्तर्गतानाञ्च केषाञ्चिदवश्यं योग्यत्वादन्यथासिद्धत्वसामान्याभावस्य प्रत्यक्षसम्भवात् कथं तद्घटितत्वेन कारणत्वस्याप्रत्यक्षत्वं प्रसज्यत इति वाच्यम्; अनुगताया अन्यथासिद्धेर्निरूपणासम्भवात् प्रातिस्विकरूपेणैव गृहीत्वा अन्यथासिद्धत्वविरहकूटस्य कारणताशरीरेऽवश्यं निवेशनीयत्वात् तादृशकूटघटकविरहविशेषप्रतियोगिनाञ्चायोग्यत्वात् तद्घटितकारणत्वस्याप्यवश्यं प्रत्यक्षायोग्यत्वं बोध्यम् । एवञ्च कारणत्वस्य प्रत्यक्षत्वे तस्य पदार्थान्तरत्वमवश्यमङ्गीकार्यम् । तस्य च कारणत्वस्य स्वरूपसम्बन्धात्मकस्य प्रत्यक्षेऽन्वयव्यतिरेकसहचारयोर्ज्ञानं कारणमिति प्राहुः ।

आलोककारास्तु मङ्गलस्य कारणता नान्वयव्यतिरेकगम्येति ग्रन्थव्याख्यायां समाप्तिकारणता न मङ्गलस्यान्वयगम्या न वा तस्य व्यतिरेकगम्येत्येवं विभज्य साध्यद्वयमुपस्थापितवन्तः । नन्वेवं मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेरितिहेतुप्रतिपादकग्रन्थः कथं सङ्गच्छतां तेन व्यतिरेकसहचारविरहमात्रस्यैव समुपस्थापनेन प्रथमसाध्ये हेतोरप्रदर्शनादिति चेन्न । तेन ग्रन्थेन न कारणत्वप्रत्यक्षहेतोर्व्यतिरेकसहचारस्याभावः समुपस्थापितः । अपि तु व्यतिरेकसहचाराभावप्रदर्शनेन समाप्तिकारणताया विरहस्यैव तेन समुपस्थापनात् । तथाच बाधितविषयत्वस्यैव हेतुत्वात् तस्य चोभयसाध्यसाधकत्वेन सर्वसामञ्जस्यात् ।

पूर्ववर्तिग्रन्थेन मङ्गले समाप्तिकारणताया यो व्यतिरेकव्यभिचारः समुपस्थापितस्तमुद्धर्तुं चेष्टते। **न च तत्रेत्यादि**। तथाहि प्रमत्तानुष्ठितसमाप्तिर्मङ्गलपूर्विका समाप्तित्वाच्छिष्टानुष्ठितकर्मसमाप्तिवदित्यनुमानेन प्रमत्तानुष्ठितसमाप्तिस्थलेऽपि तत्पूर्वकालीनं मङ्गलं प्रमाणितं भवति। तथाच नियतव्यतिरेकसहचारसम्भवात् तत्सहकृतेन प्रत्यक्षेण मङ्गले समाप्तिकारणता अवश्यं सिध्यतीति परमतात्पर्यम्। न च यत्र यत्र समाप्तित्वं तत्र मङ्गलपूर्वकत्वकमित्येवं व्याप्तिर्न सिध्यति, व्यभिचारसंशयनिवर्तकतर्काभावेनाप्रयोजकत्वादिति वाच्यम्। समाप्तित्वं यदि मङ्गलपूर्वकत्वव्यभिचारि स्यान् मङ्गलजन्यतावच्छेदकं न स्यादिति कार्यकारणभावभङ्गप्रसङ्गरूपतर्कस्य सत्त्वात्। तथाच गमकत्वात् समाप्तित्वेन हेतुना प्रमत्तानुष्ठितसमाप्तौ मङ्गलपूर्वकत्वस्यानुमित्यावश्यं सिद्धिः स्यादिति तात्पर्यम्। एतन्निरस्यति। **अन्योन्याश्रयादिति**। तथाच मङ्गलस्य समाप्तिकारणत्वे सिद्धे प्रदर्शितकार्यकारणभावभङ्गप्रसक्त्या समाप्तित्वस्य मङ्गलपूर्वकत्वे गमकत्वं स्यात्। अनुमानेन च प्रदर्शितेन व्यतिरेकव्यभिचारनिवृत्तौ समाप्तिकारणत्वं सिद्धं स्यादिति ज्ञप्तावन्योन्याश्रयान् न तेनानुमानेन प्रमत्तानुष्ठितसमाप्तौ मङ्गलपूर्वकत्वं सिद्धं भवेदिति भावः। प्रदर्शितमङ्गलपूर्वकत्वानुमानहेतोर्व्यभिचारसंशये तन्निरासार्थं समाप्तिमङ्गलयोः कार्यकारणभावभङ्गप्रसङ्ग एवास्माकं शरणं स्यात्तदावश्यमेव पूर्वोक्तप्रणाल्या परस्पराश्रयत्वं समायाति। यदि च तत्र व्यभिचारसंशयनिवृत्त्यर्थं समाप्तित्वं यदि मङ्गलपूर्वकत्वस्य व्यभिचारि स्यात् सोपाधि स्यादित्येवं निरुपाधित्वभङ्गप्रसङ्गः शरणत्वेनाभ्युपगम्येत तदा प्रमत्तानुष्ठितसमाप्तिर्मङ्गलपूर्विका समाप्तित्वादित्यनुमानेन जन्मान्तरीयमङ्गलसिद्धया व्यतिरेकव्यभिचारोऽवश्यं खण्डितः स्यादिति सहचारज्ञानसहकृतचक्षुरादिना प्रत्यक्षत एव मङ्गले नत्यादौ समाप्तिकारणत्वं निश्चितं स्यादिति चेन्नेत्याह **लोकावगतकारणेनान्यथासिद्धेश्चेति**। तथाच प्रारब्धकर्मसमाप्तेर्यानि लोकप्रसिद्धानि जीवितबुद्धिप्रतिभादीनि कारणानि तेषां सर्वेषां समावेशेऽपि मङ्गलविलम्बात् समाप्तिविलम्बस्याद्याप्यदर्शनात् क्लृतकारणताकैस्तैरेव मङ्गलसमवधानस्थलेऽपि समाप्तिसम्भवात् तदतिरिक्तं मङ्गलं तत्रान्यथासिद्धमिति मङ्गले समाप्तिकारणत्वस्य विरहान्न तत्र समाप्तिकारणत्वं प्रत्यक्षेण निश्चेतुं शक्यं प्रत्यक्षे विषयविद्यमानताया अवश्यमपेक्षणीयत्वादिति परमतात्पर्यम्। प्रयोगस्तु समाप्तिकारणत्वं न मङ्गले तन्निष्ठान्यथासिद्धिनिरूपकसमाप्तिनिरूपितत्वादित्येवंप्रकारो बोध्यः।

न चापि मङ्गलं सफलमविगीतशिष्टाचारविषयत्वाद्दर्शवदिति फलसिद्धौ प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेन नियमेनोपस्थितत्वाद् फलान्तरस्यातथाभावाद् विश्वजिन्न्यायेन फलकल्पने गौरवात् परिशेषानुमानेन तत्कारणताग्रहो व्यभिचारेण कारणत्वस्याभावादुपायसहस्रेणापि ग्रहीतुमशक्यत्वात् । तथापि तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे मानम् ।

मङ्गलस्य समाप्तिकारणत्वे प्रत्यक्षं निराकृत्येदानीं तत्रानुमानमाशंक्य निषेधति **नचापि मङ्गलमित्यादि** । पूर्वपक्षी मङ्गलस्य समाप्तिसाधकत्वेऽनुमानमुपस्थापयति **मङ्गलं सफलमविगीतशिष्टाचारविषयत्वाद्दर्शवदितीति** । यद्यपि सफलपदं साधारणतया फलविशिष्टरूपमर्थमुपस्थापयति तथाप्यत्र पृथक्त्वेन फलत्वं तद्वैशिष्ट्यञ्च विभज्य तादृशविशिष्टार्थे न प्रयुक्तम् । कार्यमात्रस्यैव फलत्वेन पारिमाण्डिल्यादिव्यतिरिक्तानां सर्वेषामेव पदार्थानां कारणत्वस्य सर्वसम्मतत्वेन च फलवत्त्वस्य मङ्गले सिद्धत्वात् तादृशानुमाने सिद्धसाधनताप्रसक्तेः । अतो बलवदनिष्टाननुबन्धित्वे सति इष्टसाधनत्वमेवात्र सफलपदेन साध्यतया विवक्षितम् । मङ्गले सामान्यत इष्टसाधनत्वस्य सर्वसम्मतत्वेऽप्यनिष्टाननुबन्धित्वस्य विप्रतिपन्नतया तादृशविशिष्टसाधने सिद्धसाधनतादोषाभावात् । रहस्यकारास्तु फलत्वं तद्वत्त्वञ्चेति विभज्यैव सफलत्वं व्याचख्युः । फलत्वञ्च तन्मते स्वकर्तव्यताप्रयोजकेच्छाविषयत्वरूपमेव । अव्यवहितपूर्ववर्तित्वसम्बन्धेन तद्वत्त्वमेव तन्मते साध्यम् । एतच्च नास्मभ्यं रोचते कथितदोषात् । अत्राविगीतशिष्टाचारविषयत्वं प्रदर्शितानुमाने लिङ्गतयोपस्थापितम् । यत्र यत्राविगीतशिष्टाचारविषयत्वं तत्र बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वमित्येवं व्याप्तिरनुमानमूलतया ग्राह्या । वेदनिषिद्धत्वमेव विगीतत्वम् । तदभाव एव सामानाधिकरण्यसम्बन्धेन विषयत्वे विशेषणतया विवक्षितः । अस्याप्रयोगे शिष्टकृतपरदारगमने व्यभिचारः स्यात् । बलवदनिष्टाननुबन्धित्वरूपविशेषणांशस्यासत्त्वेन विशिष्टसाध्याभाववति शिष्टाचारविषयत्वस्य विद्यमानत्वात् । आलोककारास्तु साध्यविशेषणतया प्रविष्टबलवदनिष्टाननुबन्धित्वस्य सप्रयोजनत्ववर्णनायां हेतुघटकीभूताविगीतत्वांशस्य निष्प्रयोजनत्वापत्तिमुपस्थापितवन्तः । साध्यांशे बलवदनिष्टाननुबन्धित्वस्याप्रवेशे इष्टसाधनत्वरूपं सफलत्वमेव साध्यं स्यात् । तस्य च परदारगमनादौ सत्त्वाच्छिष्टाचारविषयत्वस्य तत्र सत्त्वेऽपि व्यभिचाराभावेनाविगीतत्वांशो हेतौ निष्प्रयोजनको भवतीति

तदंशप्रयोजनवत्त्वाय साध्ये बलवदनिष्टाननुबन्धित्वं प्रविष्टमिति तेषामभिप्रायः। एतदप्यसमीचीनमेव प्रतिभाति। यतो यदि मङ्गलमिष्टसाधनं शिष्टाचारविषयत्वादित्येवं लघुभूतेनानुमानेनाभिप्रेतसिद्धिः स्यात् तदा तादृशगुरुतरानुमानस्य सर्वथैव गौरवदोषेण तत्परिहार एव समीचीनः स्यात्। न तु कस्यचिद् गौरवदोषस्य समर्थनाय अन्यदपि हेत्वाद्यंशप्रविष्टं गौरवं प्रेक्षावद्भिः समर्थनीयमिति भावः। अस्माकन्तु यदभिप्रेतं साध्यांशे बलवदनिष्टाननुबन्धित्वस्य प्रवेशे प्रयोजनं तदुक्तमधस्ताद्। हेतौ विशेषणीभूतं शिष्टत्वमभ्रान्तत्वरूपं ग्राह्यम्। अस्याप्रवेशे प्रारब्धकर्मसमाप्तिकामेन केनचित् पुरुषेणानुष्ठिते चैत्यवन्दनादौ हेतोर्व्यभिचारः स्यात्। तत्रत्यचैत्यवन्दनादौ समाप्तिरूपेष्टसाधनत्वस्य विरहाधिकरणेऽविगीताचारविषयत्वस्य शिष्टत्वांशविनिर्मुक्तहेतोः सत्त्वात्। न च वेदानिषिद्धत्वरूपाविगीतत्वस्य तादृशचैत्यवन्दनादावभावेनाविगीताचारविषयत्वरूपस्य विशिष्टस्य हेतोरसत्त्वादेव न व्यभिचार इति वाच्यम्। विधिना रागेण वाप्राप्ते चैत्यवन्दनादौ वेदनिषिद्धत्वस्य विरहात्। रागप्राप्तानां विधिप्राप्तानां वानिष्टजनकानां कर्मणामेव वैदिकनिषेधविषयत्वात्। न च न कुर्यान्निष्फलं कर्मेत्यादिस्मार्तवाक्यानुमितनिषेधश्रुत्या निषिद्धत्वात् कथं चैत्यवन्दनादावविगीतत्वमिति वाच्यम्। तादृशस्मृतेरप्रामाणिकत्वेन तया निषेधश्रुत्यनुमानासम्भवात्। इष्टसाधनताज्ञानस्य प्रवृत्तौ हेतुत्वात् तदभावादेवाभ्रान्तानां शिष्टानां तत्राप्रवृत्तिरिति ध्येयम्। अत्राभ्रान्तत्वरूपं शिष्टत्वमिष्टसाधनत्वांशे न तु बलवदनिष्टाननुबन्धित्वांशेऽपि। तथा सति बलवदनिष्टाननुबन्धित्वांशे भ्रान्तस्यैवपरदारगमनादौ प्रवृत्तत्वात् तत्र शिष्टाचारविषयत्वस्यैव सत्त्वेन व्यभिचाराभावात् तन्निरासार्थमविगीतपदं व्यर्थमेव स्यादिति ध्येयम्। आचारश्चात्र प्रवृत्तिरूपो ग्राह्यः। क्रियारूपत्वे तस्य सविषयत्वासम्भवेनासङ्गतिप्रसक्तेः। यदि च बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वरूपसफलत्वात्मकसाध्यस्य सर्वांशेऽभ्रान्तत्वं शिष्टत्वं स्यात् तदाविगीतशिष्टाचारविषयत्वादित्यंशं विभज्य हेतुद्वयं तन्मूलकमनुमानद्वयञ्च ग्रन्थतात्पर्यविषयीभूतं स्यात्। तथा च मङ्गलं बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनं शिष्टप्रवृत्तिविषयत्वादित्येकम्। अपरञ्च मङ्गलं तथाविधमविगीताचारविषयत्वाद् दर्शवदिति प्रयोगद्वयं ग्राह्यम्। बलवदनिष्टाननुबन्धित्वांशे भ्रान्तस्यैव परदारगमनादौ प्रवृत्तत्वात् तत्र तादृशशिष्टाचारविषयत्वस्यासत्त्वादेव व्यभिचाराभावः। चैत्यवन्दनादौ च समाप्तिसाधनत्वे भ्रान्तस्यैव प्रवृत्तत्वात् तत्रापि शिष्टप्रवृत्तिविषयत्वस्य हेतोर्विरहेण व्यभिचारशङ्कानिवृत्तेः। बौद्धाधिकृतचैत्य-

वन्वने पुण्योद्देश्यके वस्तुतः पुण्याजनके साध्याभावसत्त्वेऽपि तत्र शिष्टाचार-विषयत्वस्य हेतोरसत्त्वादेव न व्यभिचारः। तादृशानुष्ठानकर्तुर्बौद्धस्येष्ट-साधनत्वांशे भ्रान्तत्वेनाशिष्टत्वात्। सुखाद्युद्देश्यकचैत्यवन्दनादौ बलवदनिष्टाननु-बन्धित्वे सतीष्टसाधनत्वरूपसाध्यस्य सत्त्वादेव न तदन्तर्भावेणापि व्यभिचारः शङ्कनीयः। जलताडनादेरपि कथञ्चित् सुखाद्युद्देश्यकत्वेन साध्यवत्त्वादेव तदन्तर्भावेणापि शिष्टाचारविषयत्वस्य हेतोर्न व्यभिचारः। समाप्त्युद्देश्यकं जलताडनादिकन्तु शशविषाणायमानमिति न तदादाय किञ्चिदपि विचार्यमस्ति। अविगीताचारविषयत्वादिति द्वितीयहेतावविगीतत्वं वेदानिषिद्धत्वरूपं ग्राह्यम्। एतन्मते न कुर्यान्निष्फलं कर्मेत्यादि स्मृतेः प्रामाणिकत्वाभ्युपगमेन तन्मूलकानु-मितश्रुत्या चैत्यवन्दनादेरपि समाप्त्युद्देश्यकेऽविगीताचारविषयत्वरूपहेतोरसत्त्वा-देव न व्यभिचारः। मधुविषसम्पृक्तान्नभोजनादेर्हिंसाजनकत्वेन वेद-निषिद्धत्वादेवाविगीताचारविषयत्वस्य हेतोस्तत्रासत्त्वं बोध्यम्। सुखाद्यु-द्देश्यकचैत्यवन्दनजलताडनादौ च साध्यसत्त्वादेव न तदन्तर्भावेणापि हेतोर्व्यभिचारित्वम्। अत्रालोककारास्तु बलवदनिष्टाननुबन्धित्व-रूपमविगीतत्वमाहुः। तन्न मनोरमम्। समाप्त्युद्देश्येनानुष्ठिते चैत्यवन्दनादौ साध्यविरहवति बलवदनिष्टाननुबन्धित्वस्य सत्त्वेन हेतोर्व्यभिचारित्वप्रसङ्गात्। प्रकाशकारैस्तु बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वस्य सफलत्वपक्षे समाप्तिरूपविशेषफलसिद्धेरपि प्रथमानुमानेनैव सम्भवात् परिशेषानुमान-रूपद्वितीयानुमानस्य प्रयोजनाभावेन मूलग्रन्थासङ्गत्या तद्व्याख्यायामर्थान्तर-त्वापत्तिरुद्भाविता। तदपि न हृदयं स्पृशति। एतेन विशेषफलसिद्धिः कथं स्यात् तत्र तैरुक्तम्। तैस्तु अभीष्टफलजनकत्वरूपं सफलत्वं साध्यत्वेन व्याख्यातम्। एतेन यदि विशिष्य समाप्त्यादिरूपफलसिद्धिर्न स्यात् तदा तत्र बलवदनिष्टाननुबन्धित्वस्य विशेषणत्वे विशिष्टफलसिद्धि-कल्पनायां तदभिप्रायस्यास्माभिर्दुर्ज्ञेयत्वात्। यत्तु मङ्गले सफलत्वमात्रस्यैवाका-ङ्क्षितत्वात् तदतिरिक्तस्य बलवदनिष्टाननुबन्धित्वस्य साध्यांशे प्रवेशे तादृशविशिष्टसाध्यसिद्धौ विशेषणीभूतबलवदनिष्टाननुबन्धित्वस्यापि सिद्ध्यापार्थकत्वमिति तदप्यकिञ्चित्करम्। सफलत्वस्येव बलवदनिष्टाननु-बन्धित्वस्यापि प्रेक्षावत्प्रवृत्तावुपयोगित्वात् तस्यापि प्रेक्षावद्भिराकाङ्क्षितत्वात्। परिशेषानुमानलिङ्गप्रविष्टसमाप्तीतराफलकत्वस्य साधने बलवदनिष्टाननु-बन्धित्वस्यावश्यमुपयोगात्। अन्यथानिष्टफलकत्वसंशयेन मङ्गले तादृश-विशिष्टहेतोरसिद्ध्या परिशेषानुमानस्यैव दुःसाध्यत्वादिति ध्येयम्। रहस्य-कारास्तु अभीष्टफलजनकत्वमेव सफलत्वमाहुः। तथाच मङ्गलमभीष्टफल-

जनकमविगीतशिष्टाचारविषयत्वाद् दर्शवदित्यनुमाने ग्रन्थतात्पर्यमभिहितवन्तः। अत्र मते वेदानिषिद्धत्वमेवाविगीतत्वम्। एतेन च चैत्यवन्दनजलताडनागम्यागमनादिषु व्यभिचारो निरस्तस्तेषां सर्वेषामेव वेदनिषिद्धत्वात्। न कुर्यान्निष्फलं कर्मेत्यादिस्मृतेः प्रामाणिकत्वाभ्युपगमात्। न चैवमपि सुखे व्यभिचारः। तस्येष्टत्वेनेष्टसाधनत्वाभावात्। तत्र च वेदानिषिद्धशिष्टप्रवृत्तिविषयत्वस्य हेतोः सत्त्वादिति वाच्यम्। साध्यतया प्रवृत्तिविषयत्वस्यैव हेतुत्वात्। उद्देश्यतया प्रवृत्तिविषयत्वस्य सुखे सत्त्वेऽपि प्रवृत्तिनिरूपितसाध्यत्वाख्यविषयतायास्तत्रासत्त्वात्। पश्वादिकृतचेष्टायामविगीतत्वस्य सत्त्वेन व्यभिचारवारणार्थं प्रवृत्तौ शिष्टसम्बन्धित्वं विशेषणतयावश्यकम्। शिष्टत्वञ्च वेदप्रामाण्याभ्युपगन्तृत्वमेव। एवञ्च पश्वाद्यनुष्ठितवृथाकर्मणि शिष्टप्रवृत्तिविषयत्वासत्त्वाद् व्यभिचारो निरस्तः। एतदप्यसारम्। चैत्यवन्दनादीनां साक्षाद्वेदेन निषिद्धत्वाभावात्। न कुर्यान्निष्फलं कर्मेत्यादिस्मृतेरप्रामाणिकत्वाच्चेत्यलमतिविस्तरेण।

पूर्वकथितानुमानेन सामान्यतः फलवत्त्वसिद्धावपि विशेषतः फलस्याज्ञानान्न तेन मङ्गले प्रेक्षावतां प्रवृत्तिर्भवितुमर्हतीत्यतो विशेषतः समाप्तिरूपफलवत्त्वसिद्ध्यर्थं परिशेषानुमानमुपस्थापयति **प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेने-**त्यादिना। अत्र नापि मङ्गलं सफलमविगीतशिष्टाचारविषयत्वाद्दर्शवदिति फलसिद्धौ परिशेषानुमानेन तत्कारणताग्रह इत्येवमन्वयो बोध्यः। फलसिद्धाविति सतिसप्तम्याः प्रयोज्यत्वमर्थः। तस्य च परिशेषानुमानेऽन्वयः। तत्कारणताग्रहेति तत्पदं समाप्तिपरम्। तथाच मङ्गलं सफलमित्यनुमितिरूपा या सामान्यतः सफलत्वसिद्धिस्तत्प्रयोज्यं यत् परिशेषानुमानं तेन समाप्तिकारणताग्रह इत्यर्थो लभ्यते। मङ्गलं समाप्तिसाधनं समाप्तिभिन्नफलान्तराजनकत्वे सति फलजनकत्वादिति परिशेषानुमानस्य प्रयोगो बोध्यः। एतदनुमानात् पूर्वं यदि मङ्गले सामान्यतः फलजनकत्वं सिद्धं नाभवत् तदा प्रदर्शितलिङ्गान्तर्गतविशेष्यस्य सामान्यतः फलजनकत्वस्य पक्षेऽनिश्चयात् प्रदर्शितं विशिष्टं लिङ्गं स्वरूपासिद्धं स्यात्। अतस्तदंशसिद्धौ सफलत्वानुमानस्यापेक्षितत्वेन परिशेषानुमाने तत्प्रयोज्यत्वं सिद्धं भवति। धनविषयककामनाविशिष्टपुरुषाननुष्ठितदर्शादियागस्य धनफलकत्वाभाववत्त्वस्य सर्वसम्मतत्वेन तद्दृष्टान्ताद् यद्विषयककामनाविशिष्टपुरुषाननुष्ठितं तन्न तत्फलकमिति सामान्यतो व्याप्तेर्निश्चितत्वेन मङ्गलं न समाप्तिसाधनं समाप्तिविषयककामनाविशिष्टपुरुषाननुष्ठितत्वादिति प्रतिपक्षानुमानेन मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादिति समाप्तिसाधकानुमानस्य

बद्धितत्वात् कथं तेन विशेषतः फलसिद्धिः स्यादित्याकाङ्क्षायामाह **प्रारिप्सितसमाप्तेस्तदानीमपेक्षितत्वेन नियमेनोपस्थितत्वादिति** । तथाहि मङ्गलाचरणकाले समारब्धकर्मसमाप्तेरुत्कटेच्छाविषयत्वेन तत्कामनाविशिष्ट-पुरुषानुष्ठितत्वस्य मङ्गलेऽवश्यं निश्चितत्वात् प्रतिपक्षानुमानहेतोः स्वरूपासिद्धत्वेन समानबलत्वाभावान्न समाप्तिफलकत्वानुमानबाधकत्वमिति तात्पर्यार्थः । सुखकामनायाः फलकामनात्वेन साधनकामनायां प्रयोजकत्वात् समाप्तिकामनावत् सुखकामनाया अपि प्रवर्तमानपुरुषस्य सम्भवान्मङ्गलाचरणस्थले समाप्ति-कामनावत् सुखकामनाया अपि नियतोपस्थितिकत्वात् तत्फलकत्वं मङ्गले कल्पयितुं योग्यमिति इतराफलकत्वस्य हेतुविशेषणीभूतस्य मङ्गलेऽसत्त्वात् कथितं परिशेषानुमानं स्वरूपासिद्ध्या दुष्टमित्याकाङ्क्षायामाह । **फलान्तर-स्यातथाभावादित्यादि** । फलान्तरस्य ग्रामपश्वादेरित्यर्थः । अतथाभावात् कामनाविषयत्वेन नियतोपस्थितिकत्वाभावात् । तथाच तत्तत्फलकत्वाभावः सिद्ध एव मङ्गले । सुखात्मकस्वर्गस्य कामनाविषयत्वेन समाप्तिवन्नियतोप-स्थितिकत्वान्न तस्यातथाभूतत्वं कल्पयितुं योग्यमित्यत आह । **विश्वजिन्न्यायेन फलकल्पने गौरवादिति** । तथाहि स्वर्गादिसुखं न मङ्गलफलं गौरवादित्यनु-मानेन तत्फलकत्वाभावसिद्धौ मङ्गलं समाप्तिफलकं तदितराफलकत्वे सति सफलत्वादिति परिशेषानुमानेन समाप्तिफलकत्वं निर्बाधं सिध्यतीति तात्पर्यम् । गौरवञ्चेत्थम् । यत्रोत्पत्तिविधौ कामना नोल्लिखिता भवति तत्र मीमांसका रात्रिसत्रन्यायेन विश्वजिन्न्यायेन वा फलं कल्पयन्ति । रात्रिसत्रस्योत्पत्तिविधौ कामनात्मकाधिकारस्यानुल्लेखेऽपि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यर्थ-वादवाक्ये प्रतिष्ठायाः समुल्लेखात् तत्प्राप्तप्रतिष्ठायां कामनाविषयत्वरूपं फलत्वं कल्पितम् । विश्वजिता यजेतेति विश्वजिद्यागोत्पत्तिविधौ कामना नान्तर्भूतास्ति रात्रिसत्रस्थलवदत्रार्थवादवाक्यादपि न फलस्वरूपं लब्धं भवति । सुखकामनायाः सकलसाधनकामनायां मूलत्वात्तत्रापि कामनाविषयत्वेनोपस्थिते स्वर्गे फलत्वं कल्पितं मीमांसकैः । मङ्गलाचरणस्थलं तु न रात्रिसत्रेण तुल्य-मर्थवादवाक्याभावात् । अतो विश्वजिन्न्यायेनैवात्र फलं कल्पनीयं स्यात् । तन्न्यायेन फलकल्पने विश्वजिद्यागवत् मङ्गलमपि प्रधानं कर्म भवेत् । प्रधानकर्मत्वे च मङ्गलस्य पृथगधिकारः कल्पनीया भवति । एवञ्च समारब्धकर्माधिकारो मङ्गलाधिकारश्चेत्यधिकारद्वयं स्वीकर्तव्यम् । समाप्तिफलकत्वे तु मङ्गलस्य समारब्धकर्माङ्गत्वं भवति, समारब्धकर्मजन्य-समाप्तिरूपफलजनकत्वात् । अङ्गत्वे च प्रधानकर्माधिकारेणैवाधिकार-पर्यवसानात् समाप्तिफलकत्वे द्वितीयाधिकाराकल्पनप्रयुक्तं लाघवं भवतीति गौरवात् स्वर्गफलकत्वं मङ्गले प्रत्युक्तं भवतीति मूलग्रन्थतात्पर्यम् ।

व्यभिचारेण कारणत्वस्याभावादुपायसहस्रेणापि ग्रहीतुमशक्यत्वात्। तथापि तथाविधशिष्टाचारानुमितश्रुतिरेव मङ्गलस्याभिमतहेतुत्वे मानम्।

पूर्वं यदनुमानेन मङ्गलस्य समाप्तिकारणत्वं साधितं तदयुक्तमित्याह। **व्यभिचारेणे**त्यादि। तथाहि कादम्बर्यादिनिष्ठायां नास्तिकनिर्मितग्रन्थाश्रितायां समाप्तावन्वयव्यतिरेकयोर्व्यभिचारस्य प्रत्यक्षेण ज्ञातत्वान्नानुमानादिना प्रमाणान्तरे मङ्गले समाप्तिकारणता समर्थनीया भवेद्, व्यभिचारग्रहसत्त्वे उपायसहस्रस्यापि कारणताग्राहकत्वासम्भवादिति भावः। **तथापी**त्यादि। यद्यप्यन्वयव्यतिरेकव्यभिचारग्रहणेनासामर्थ्यात् प्रत्यक्षानुमानाभ्यां कारणत्वं निर्णेतुमशक्यं तथापीत्यर्थः। तथाहि भगवन्निर्मितत्वेन श्रुतिप्रमाणस्य प्रमाणान्तरतोऽधिकबलवत्तया तेन मङ्गले समाप्तिकारणत्वं सिद्धं स्यादित्यभिमानः[1]। अथैतत् तदैव स्याद् यदि मङ्गलस्य समाप्तिकारणताप्रतिपादकः कश्चिदपि वेदभागः स्यात्। तन्न सम्यक्। तादृशवेदभागस्याधुनापि प्रत्यक्षेण प्राप्त्यभावादित्यत्राह। **तथाविधे**त्यादि। **तथाविधशिष्टाचारे**ति। कर्मारम्भपूर्वकालीना ये शिष्टकृता भगवन्नामकीर्तनाद्याचारास्तैरनमिता या तथाविधा मङ्गलस्य समाप्तिकारणत्वप्रतिपादिका समाप्तिकामो मङ्गलमाचरेदित्याद्याकारिका श्रुतिः सैव। **अभिमतहेतुत्वे**। इच्छाविषयीभूते मङ्गलस्य समाप्तिकारणत्वे। **मानम्**। साधकमित्यर्थः।

---

[1] यद्यपि मङ्गलस्य कर्तव्यतायां वेदबोधितत्वं साक्षान्न लभ्यते तत्कर्तव्यताबोधकवेदस्य प्रत्यक्षतोऽनुपलब्धेः। एवमप्यनुमानेन तादृशो वेदः सिध्येदेव। तथाहि मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतो यः समाप्त्युद्देश्यकशिष्टाचारस्तद्विषयत्वाद् दर्शादिवत्। अस्यामनुमितौ मङ्गले समाप्तिव्यभिचारनिश्चयस्याबाधकत्वेन तादृशव्यभिचारनिश्चयसत्त्वेऽपि प्रदर्शितानुमानेन मङ्गलस्य कर्तव्यताप्रतिपादको वेदः प्रमाणितः स्यात्। अनयानुमित्या वेदत्वेन तादृशवेदस्य सिद्धावप्यानुपूर्वीविशेषस्याप्राप्तिरस्त्येव। एवञ्चाकाङ्क्षाया अज्ञातत्वेन न मङ्गलस्य कर्तव्यत्वं श्रुतिप्रतिपादितं स्यादिति चेन्न। मङ्गले समाप्तिकामनावच्छिष्टाचारविषयत्वस्य बहुधा दृष्टत्वेन पूर्वसंस्कारसमुद्बोधात् समाप्तिकामो मङ्गलमाचरेदित्यानुपूर्व्या वेदस्य मङ्गले कर्तव्यताप्रतिपादकस्यावश्यं स्मरणात्। अत्रापि स्मरणे समाप्तिव्यभिचार-

**न च व्यभिचारः। निष्परिपन्थिश्रुत्या मङ्गलं समाप्तिसाधनमिति प्रमापिते तत्रापि तयैव लिङ्गेन जन्मान्तरीयतदनुमानात्।**

**न च व्यभिचार** इत्यादि। वाच्यमिति शेषः। तथा च शिष्टाचारानुमितया समाप्तिकामो मङ्गलमाचरेदित्यादिश्रुत्या मङ्गलस्य समाप्तिकारणत्वे बोधितेऽपि प्रत्यक्षदृष्टेन प्रोक्तेन व्यभिचारेण श्रौतबोधस्य भ्रान्तत्वप्रसक्त्या न तया मङ्गलस्य समाप्तिकारणत्वं सुदृढं स्याद्, भ्रान्तत्वग्रहानास्कन्दितस्यैव निश्चयस्य वस्तुसाधकत्वादिति पूर्वपक्षाभिप्रायः। एतन्निषेधति **निष्परिपन्थिश्रुत्यादि**। अत्र शाब्दबोधौपयिकसामग्रीविघटनसमर्थं वस्त्वेव परिपन्थित्वेन ग्राह्यम्। तदसमवहितत्वमेव श्रुतेर्निष्परिपन्थित्वम्। तथाविधया श्रुत्या प्रथमतो मङ्गलस्य समाप्तिसाधनत्वं, सति च तस्मिंस्तयैव तादृशश्रुत्यर्थानुपपत्त्या लिङ्गभूतया व्यतिरेकव्यभिचारस्थले जन्मान्तरीयं तन्मङ्गलमनुमितं[1] स्यात्। एवञ्च सति व्यभिचारनिश्चयस्याप्रामाण्यशङ्काकलङ्कितत्वेन तस्य शाब्दबोधसामग्रीविघटनासामर्थ्यात् परिपन्थिरहितया श्रुत्या मङ्गलस्य समाप्तिकारणत्वं सुदृढं स्यादित्युत्तरपक्षाभिप्रायः।

न च वेदबोधितकर्तव्यताकत्वात्मकं यत् प्रदर्शितस्यानुमानस्य साध्यं तद्वत्तया निश्चितेऽग्निहोत्रादौ यागेऽलौकिकाविगीतसमाप्त्युद्देश्यकशिष्टाचारविषयत्वरूपस्य हेतोरसत्त्वेन पक्षैकदेशीभूते व्याकरणसूत्रादिस्थलीये मङ्गलविशेषे चानुमानात् पूर्वं साध्यस्यैव वेदबोधितकर्तव्यताकत्वरूपस्यानिश्चितत्वेन

---

निश्चयस्याप्रतिबन्धकत्वेन तस्य निष्प्रत्यूहत्वात्। प्रोक्तश्रुत्या समाप्तिकामनाया अधिकारत्वेन समर्पणादधिकारिकामनाविषयस्य च क्रियाफलत्वादर्थतो मङ्गले समाप्तिसाधनत्वमपि श्रुतिबलादेव सिध्यति। निष्प्रत्यूहया श्रुत्या प्रतिपादितस्यार्थस्य परित्यागानर्हत्वेन तदनुपपत्त्यैव प्रत्यक्षमङ्गलरहितसमाप्तिस्थले जन्मान्तरीयं तदवश्यमुररीकर्तव्यमिति व्यतिरेकव्यभिचारनिश्चयस्य सन्दिग्धप्रामाण्यकत्वेन बाधनानर्हत्वान्मङ्गलस्य समाप्तिसाधनत्वं श्रुतिसिद्धमिति ग्रन्थकर्तुर्निगूढाभिप्रायः।

[1] नैषधादिस्थलीया समाप्तिर्मङ्गलपूर्विका समाप्तित्वाद् व्याकरणसूत्रादिस्थलीयसमाप्तिवदित्यनुमानेनैहिकमङ्गलबाधनिश्चयसहकृतेन मङ्गलत्वरूपसामान्यधर्मपुरस्कारेण मङ्गलपूर्वकत्वसिद्धौ जन्मान्तरीयमङ्गलपूर्वकत्वमेव तत्र सिद्धं स्यात्। इतरबाधादिनिश्चयस्थले सामान्यधर्मपुरस्कारेण विशेषसिद्धेर्न्यायसम्मतत्वादिति तात्पर्यम्।

दृष्टान्तासिद्ध्या सपक्षसत्त्वरूपगमकतौपयिकरूपविशेषवैधुर्येणालिङ्गत्वान्न तादृशेनानुमानेनाभिमतो वेदः प्रमापयितुं शक्य इति वाच्यम् । समाप्त्युद्देश्यकस्वस्याचारांशेऽविवक्षितत्वेनालौकिकाविगीतशिष्टाचारविषयत्वमात्रस्यैव लिङ्गत्वेनोपन्यासात् । एवञ्चाग्निहोत्रयागादेरेवान्वयिदृष्टान्तत्वसम्भवात् सपक्षसत्त्वेन लिङ्गस्य गमकतौपयिकरूपवत्त्वमिति ध्येयम् ।

तच्चेदमारब्धकर्माङ्गं कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात् फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च दर्शे प्रयाजादिवत् । आचारमूलकश्रुत्यनुमानाभ्यां तदर्थितया तत्कर्तव्यत्वबोधनात् तत्फलकत्वबोधनाच्च ।

— एतावता प्रबन्धेन मङ्गलस्य समारब्धकर्मसमाप्तिफलकत्वं व्याख्यातम् । इदानीं तस्य समारब्धकर्मस्वङ्गत्वं प्रतिपादयितुमाह । **तच्चेदमित्यादि** । यद्यपि फलवत्सन्निधौ यदफलं तदङ्गमिति न्यायान्मङ्गलस्यारब्धकर्माङ्गत्वं न सिध्यति, कस्यापि फलवत्कर्मप्रकरणे तस्यासमाम्नातत्वात्, तथाप्यनुमानेन मङ्गलस्य समारब्धकर्माङ्गत्वं सिद्धं भवतीत्याह । **आरब्धकर्माङ्गमित्यादि** । **इदमिति** पक्षनिर्देशः । मङ्गलञ्च तदर्थः । **आरब्धकर्माङ्गमिति** साध्यवचनम् । **कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वादिति** लिङ्गोपन्यासः । **प्रयाजादिवदि**त्युदाहरणप्रदर्शनम् । तथा च प्रोक्तेनानुमानेन मङ्गलस्य समारब्धकर्माङ्गत्वं सिध्यतीति हृदयम् । यद् यत् कस्यापि कर्मणः स्वरूपनिर्वाहं समाप्तिं वाभीप्सुभिः शिष्टैस्तत्तत्कर्मारम्भात् पूर्वं क्रियमाणं भवति तदेव तत्तत्कर्मणोऽङ्गं भवतीति[1] प्रयोजिका व्याप्तिः । दृष्टञ्चैतद् दर्शादियागस्थलीय-

---

[1] अनेन च ग्रन्थेन कर्मस्वरूपफलैतदन्यतरनिर्वाहकत्वे सति कर्मप्रागभावाधिकरणकालनिर्वाह्यत्वमेवाङ्गत्वमित्यायाति । न चैतदसमीचीनमेव प्रतिभाति । दक्षिणादानादेः फलनिर्वाहकाङ्गत्वस्य कर्मस्वरूपसमाप्त्यनन्तरक्रियमाणत्वस्य च शास्त्रसम्मतत्वात् तत्र कर्मप्रागभावाधिकरणीभूतकालनिर्वाह्यत्वाभावेन लक्षणस्याव्याप्तत्वादिति वाच्यम् । तत्र कर्मप्रागभावाधिकरणकालपदेन कर्माधिकरणीभूतकालादन्यकालत्वस्यैव लक्षणघटकतया विवक्षितत्वात् । एवञ्च नाव्याप्तेरवकाशो दक्षिणादानादेः कर्माधिकरणीभूतकालादन्यस्मिन्नेव कर्मसमाप्त्यनन्तरकाले निर्वाह्यत्वादिति ध्येयम् ।

**दर्शारम्भसमये नियमेन क्रियमाणाया अप्यारम्भणीयायास्तदर्थितया-क्रियमाणत्वात् फलान्तरश्रवणाच्च प्रधानत्वमिति न तया व्यभिचारः ।**

प्रयाजादौ। दर्शयागमीप्सुभिः शिष्टैस्तद्यागात् पूर्वं प्रयाजादीनामनुष्ठानं क्रियते । तच्च प्रयाजादि दर्शयागेऽङ्गं भवतीति सर्वसम्मतम् । प्रकृतस्थलेऽपि ग्रन्थं निर्मिमीप्सुभिः शिष्टैर्ग्रन्थनिर्माणरूपात् कर्मणः प्राङ् मङ्गलमनुष्ठीयते । अतस्तन्मङ्गलमप्यवश्यमेव तादृशनिर्माणात्मककर्मस्वङ्गं स्यादिति तात्पर्यार्थः ।

मङ्गलस्यारब्धग्रन्थनिर्माणरूपकर्मणोऽङ्गत्वसाधकानुमाने कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वं लिङ्गतयोपन्यस्तं ग्रन्थकृता । तत्र मङ्गलात्मकपक्षे आरब्धकर्मपूर्वकालीनशिष्टपुरुषगतकृतिविषयत्वरूपस्य विशेष्यांशस्य शिष्टैस्तत्पूर्वं क्रियमाणत्वरूपस्य विशेष्यांशस्येति यावत् प्रत्यक्षादिप्रमाणसिद्धत्वेऽपि कर्मजन्यफलेच्छाप्रयोज्यत्वरूपविशेषणांशस्य कर्मार्थितयेति विशेषणांशस्येति यावत् कृतौ प्रत्यक्षादिनानिश्चितत्वात् तादृशविशिष्टहेतुः पक्षेऽसिद्ध एव भवति। द्वितीयकल्पे तु तत्र तत्साधनार्थं **फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वं** लिङ्गतयोपन्यस्तं दृश्यते । तत्रापि फलान्तराभावरूपविशेषणांशस्य मङ्गले प्रत्यक्षादिनानिश्चितत्वात् तादृशविशिष्टहेतुरसिद्ध एवास्तीत्यसिद्धिद्वयं निराकर्तुमाह । **आचारमूलकश्रुत्यनुमानाभ्यामित्यादि** । तत्राचारमूलकश्रुतीत्यनेनांशेन प्रथमदोषोऽनुमानेत्यनेन च द्वितीयदोषः परिहृतो जातः। तथाच शिष्टाचारानुमितश्रुतेः प्रथमतः सामान्यतो वेदत्वेन सिद्धावपि मङ्गले समाप्तिसाधनत्वानुमानानन्तरं तस्याः समाप्तिकामो मङ्गलमाचरेदित्याकारेण पर्यवसानात् तया मङ्गले कर्मार्थित्वं कर्मजन्यसमाप्तिरूपफलविषयकेच्छाप्रयोज्यत्वात्मकं प्रमाणितं भवतीति प्रथमासिद्धेः परिहारो बोध्यः। द्वितीयस्य चानुमानाद् गौरवात्मकतर्कात् परिहारः। तथाहि मङ्गलस्य विश्वजिन्न्यायेन स्वर्गफलकल्पने तद्वदेव प्रधानकर्मत्वं पर्यवसितं भवति। प्रधानकर्मत्वे चाधिकारिभेदोऽपि कल्पनीयो भवतीति गौरवप्रतिसन्धानेन मङ्गले समाप्तिभिन्नाफलकत्वरूपं तदन्यफलकत्वं सिद्धं भवतीति हृदयम्। पूर्वप्रदर्शिते आरब्धकर्माङ्गत्वसाधकहेतौ विशेषणीभूतस्य तदर्थितयेत्यंशस्य फलान्तराभावे सतीत्यंशस्य च व्यावृत्तिमाह । **दर्शारम्भसमय** इत्यादि । तथाह्यङ्गत्वसाधकप्रथमहेतौ प्रविष्टस्य तदंशस्य परिहारे शिष्टैस्तत्पूर्वं क्रियमाणत्वमेव लिङ्गं भवति। द्वितीयहेतौ तु फलान्तराभावे सतीत्यंशो विशेषणतया प्रविष्टोऽस्ति। तत्परित्यागे च फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वमेव लिङ्गं स्यात्। आग्नेयाष्टकपालं चरुं निर्वपेद् दर्शपौर्णमासावारिप्समान इत्यादि-

श्रुत्या दर्शादियागपूर्वकालीनकर्तव्यत्वेनारम्भणीयाख्या काचिदिष्टिर्विहितास्ति । तस्या दर्शादियागानङ्गत्वमपि मीमांसकैरङ्गीकृतम् । एवञ्च दर्शादियागाङ्गत्वाभाववत्यां तस्यामिष्टौ दर्शात् पूर्वं शिष्टैः क्रियमाणत्वस्य सत्त्वाद्व्यभिचारो बोध्यः । द्वितीयस्यापि फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वरूपहेतोस्तत्र सत्त्वाद्व्यभिचारः । तत्तद्विशेषणांशप्रवेशे तु प्रथमस्थले दर्शयागजन्यफलकामनाप्रयोज्यत्वविरहात् तादृशविशिष्टहेतोरपि तस्यामिष्टावसत्त्वाद् द्वितीयस्थले च दर्शादियागजन्यफलव्यतिरिक्तफलवत्त्वस्य सत्त्वात् फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वरूपस्य विशिष्टहेतोस्तत्रासत्त्वेन व्यभिचाराभावो बोध्यः । **दर्शारम्भसमय** इति । तत्पूर्वसमय इत्यर्थः । **आरम्भणीयाया** इति । तन्नामकस्य यागविशेषस्येत्यर्थः ।

ननु मङ्गलमलौकिकं लौकिके नाङ्गं भवति लोकावगतकारणत एव तदुपपत्तेः । अतएव गृहरथादौ 'आरे भग्ने इन्द्रबाहुर्बद्धव्यः', 'पायसं ब्राह्मणो भोजयितव्य' इत्यत्र तदुभयं नाङ्गं किन्तु नैमित्तिकम् । तद्वदिदमप्यारम्भसमयनिमित्तकमस्तु, विश्वजिन्न्यायात् स्वर्गः फलमिति चेन्न । तस्यापूर्वरूपोपकारजनकाङ्गविषयत्वात् ।

मङ्गलस्य यद् ग्रन्थनिर्माणात्मककर्माङ्गत्वं पूर्वमुक्तं तत्र बाधकमवतारयति **ननु मङ्गलमलौकिकमित्यादि** । तक्षसूत्रेऽलौकिकं **लौकिके** नाङ्गमित्यनेन सूत्रेणालौकिकस्य लौकिकं कर्म प्रत्यङ्गत्वं निषिद्धमस्ति । मङ्गलमलौकिकमेव, शिष्टाचारानुमितया श्रुत्या कर्तव्यत्वेन बोधितत्वात् । ग्रन्थनिर्माणं पुनर्नालौकिकं श्रुतिबोधितकर्तव्यताकत्वाभावात् । तथा च ग्रन्थनिर्माणस्य लौकिकत्वेन मङ्गलस्य च तद्विपरीतत्वेन तदङ्गत्वं न सम्भवति । तदङ्गत्वसाधकस्य मङ्गलं समारब्धग्रन्थाङ्गं तज्जन्यसमाप्तिरूपफलकामैः शिष्टैस्तत्पूर्वं क्रियमाणत्वादित्यनुमानस्य प्रोक्तसूत्रनिषिद्धत्वेन न्यायाभासत्वात् । प्रत्यक्षविरोधे शास्त्रविरोधे वा न्यायाभासत्वस्य भाष्यकृद्भिरुक्तत्वादिति पूर्वपक्षतात्पर्यम् । **अलौकिकमिति** । वेदबोधितकर्तव्यताकमित्यर्थः । **लौकिके** वेदबोधितकर्तव्यताकान्ये । मङ्गलस्यारब्धग्रन्थानङ्गत्वे ग्रन्थसमाप्तिं प्रत्यपि तस्याकारणत्वं स्यात् । एवञ्चारब्धकर्मपरिसमाप्तिः कथं स्यादित्याकाङ्क्षायामाह । **लोकावगतेत्यादि** । तथाच बुद्धिप्रतिभासामर्थ्यजीवितादिलोकसिद्धकारणकलापादेव समारब्धग्रन्थपरिसमाप्तिसम्भवात् तदर्थं मङ्गलस्य समारब्धकर्माङ्गत्वं नापेक्षितमिति भावः । **तदुपपत्तेरिति**। ग्रन्थपरिसमाप्त्युपपत्तेरित्यर्थः । अलौकिकस्य

लौकिककर्मानङ्गत्वं द्रढयितुं तत्र वैदिकं दृष्टान्तमुपस्थापयति। अतएव गृहरथेत्यादि। तथाहि गृहनिर्माणे रथनिर्माणे वा समारब्धे यदि आरस्य भङ्गो भवेद् तदा इन्द्रबाहुबन्धनात्मकं पायसभोजनात्मकञ्च कर्म अनुष्ठेयं भवति। श्रुतिविहितत्वेनैतदुभयमेवालौकिकं, गृहनिर्माणं रथनिर्माणं वा न तथा, वेदाविहितत्वात्। गृहनिर्माणादौ न तदुभयोरङ्गत्वं स्वीकृतमपि तु आरभङ्गात्मकनिमित्तं प्राप्य विहितत्वान्नैमित्तिकमेव। तयोः फलमपि शङ्कितपापनिवृत्तिरेव। आरो लौहकीलः। इन्द्रबाहुर्लौहनिर्मितो वायसः।

नन्वेवं यदि गृहादिनिर्माणे इन्द्रबाहुबन्धनादिवन्मङ्गलमपि समारब्धग्रन्थनिर्माणकर्मण्यनङ्गं स्यात् तदा तेन सम्बन्धाभावान्मङ्गलं येन केनापि कर्त्रा यस्मिन् कस्मिन्नपि काले कर्तुं शक्यत इति चेन्नेत्याह। तद्वदिदमित्यादि। तथाहि गृहरथाद्यनङ्गमपि इन्द्रबाहुबन्धनादिकं यथारभङ्गरूपनिमित्तं प्राप्यानुष्ठेयत्वादारभङ्गानन्तरकाल एव गृहकर्त्रैव सम्पाद्यं नान्येनान्यस्मिन् वा काले, तथा ग्रन्थनिर्माणानङ्गमपि मङ्गलं तदारम्भरूपनिमित्तं प्राप्य विहितत्त्वाद् ग्रन्थनिर्माणकर्त्रैव तत्पूर्वमवश्यं कर्तव्यम्। पृथक् प्रधानकर्मत्वाच्च विश्वजिन्न्यायात् फलं स्वर्ग एव कल्पनीय इति पूर्वपक्षग्रन्थतात्पर्यम्। अत्र मीमांसासिद्धान्तमुपस्थापयति। तस्यापूर्वेत्यादि। तस्यैति। अलौकिकं लौकिके नाङ्गमिति पूर्वोक्तस्य सूत्रस्येत्यर्थः। उपकारो व्यापारः। तथाहि तक्षसूत्रेणालौकिकानां कर्मणां यल्लौकिककर्मण्यनङ्गत्वमुक्तं तन्न सार्वत्रिकमपि तु यान्यलौकिककर्माणि तान्यदृष्टद्वारा फलोपकारकाणि तादृशानामेवालौकिककर्मणां लौकिककर्मस्वनङ्गत्वभिप्रेतम्। प्रकृते तु ग्रन्थसमाप्तिरूपफलोद्देशेन श्रुतिविहितकर्तव्यताकस्यापि (अलौकिकस्य) मङ्गलाचरणस्य दृष्टो यो विघ्नध्वंसरूपो व्यापारस्तद्द्वारा ग्रन्थसमाप्तिसाधकत्वात् सूत्रबोधितनिषेधाविषयत्वेन तस्यारब्धकर्माङ्गत्वं निर्बाधमेवेति भावः।

अयन्तु प्रतिबन्धकाभावरूप उपकारः। तस्य च लोकावगतकारणसहकारितैव ; प्रतिबन्धके सति तस्मात्तदनुपपत्तेः।

प्रतिबन्धकाभावरूपस्योपकारस्य लौकिकत्वमाह। तस्य च लोकावगतेति। ग्रन्थपरिसमाप्तिनिमित्तानि यानि लोकप्रसिद्धानि बुद्धिप्रतिभाप्रभृतीनि सति प्रतिबन्धके तानि समाप्तिरूपफलवन्ति न भवन्तीत्यस्माभिर्दृश्यते। तथाच प्रतिबन्धकाभावस्य तत्सहकारिता लोकसिद्धैवास्ते। अतो मङ्गलाचरणस्थले समाप्त्यर्थं नापूर्वकल्पनाया मनागप्यवसर इति तत्त्वम्। अथालौकिकं लौकिके

नाङ्गमिति तक्षाधिकरणवाक्ये सामान्यत एवालौकिकस्य लौकिककर्मानङ्गत्व-मुक्तमिति श्रूयते। तस्य तादृशविशेष्यार्थपरत्वे किं मानमिति चेन्न। अलौकिकस्य सामान्यत एव लौकिकफलानङ्गत्वे वृष्टिकामः कारीर्या यजेतेत्यादिविध्य-प्रामाण्यापत्तेः। श्रुतिबोधितकर्तव्यताकत्वात् कारीरीयागस्यालौकिकत्वं स्फुट-मेव वर्तते। वृष्ट्यात्मकं तत्फलन्तु प्रत्यक्षसिद्धमेव। एवञ्च सामान्यत एवा-लौकिकस्य लौकिकानङ्गत्वे कारीर्यादेरपि वृष्टिजनकत्वस्य तत्सूत्रनिषिद्धत्वात् कारीर्यादेर्वृष्टिजनकत्वप्रतिपादिकायाः वृष्टिकामः कारीर्या यजेतेति श्रुते-र्बाधितार्थप्रतिपादकत्वेनाप्रामाण्यं स्यात्। तादृशविशेषार्थकत्वे तु प्रदर्शित-विधेर्नाप्रामाण्यापत्तिः। भौतिकोष्मादिरूपप्रतिबन्धकनिवृत्तिद्वारा कारीरी-यागस्य वृष्टिरूपफलजनकत्वादपूर्वाद्वारकत्वेनालौकिकस्यापि यागस्य फल-जनकत्वे बाधविरहेण न श्रुतेरप्रामाण्यापत्तिरिति ध्येयम्। सर्वत्रैवालौकिकस्य लौकिकफलजनकत्वे विघ्नध्वंस एव द्वारं न त्वपूर्वमिति सिद्धान्तः। विघ्नत्वञ्चा-पूर्वनिष्ठोपाधिविशेष एव।

अपूर्वन्तु न तथा। विघ्नध्वंसद्वारा चेदमङ्गं न त्विडो यजती-त्यादिविधिबोधितप्रयाजाद्यङ्गयागवददृष्टद्वारा, मङ्गलजन्यादृष्टं विनापि स्वतःसिद्धविघ्नविरहवत आरब्धनिर्वाहात्।

केचित् पुत्रेष्ट्या यजेत पुत्रकाम इत्यादिलौकिकफलजनकपुत्रेष्ट्यादियागानामपूर्वद्वारा फलजनकत्वमाहुः। तन्निषेधति। अपूर्वन्तु न तथेत्यादि। पुत्रेष्ट्यादियागजन्यमपूर्वं न पुत्रादिरूपफलजनकमपि तु विघ्नध्वंसद्वारैव। इदमिति। लौकिकफलजनकपुत्रेष्टियागादिकं कर्मेत्यर्थः। ननु मङ्गलं विघ्नविरहद्वारैव समाप्तिफलजनकं नापूर्वद्वारेत्यत्र किं मानमिति चेदाह। नेत्यादि। तथाच स्वतःसिद्धविघ्नविरहस्थलीयसमाप्तौ मङ्गलजन्यापूर्वस्य व्यतिरेकव्यभिचारेण तद्द्वारा समाप्तिजनकत्वाभावादिति भावः। इड इति। तन्नामका देवास्तानित्यर्थः। यजेः कर्म करणं सम्प्रदानञ्च कर्मेति न्यायादुद्देश्यत्वार्थे द्वितीयाबहुवचनान्तोऽयं प्रयोगः।

यदुक्तमधस्तात् मङ्गलं नापूर्वद्वारारब्धकर्मसमाप्तिसाधनं तद् द्रढयितुम-पूर्वस्य व्यतिरेकव्यभिचारमुपन्यस्यति। मङ्गलजन्यादृष्टं विनापीत्यादि। तथाहि नैषधचरितादौ स्वतःसिद्धविघ्नविरहस्थले मङ्गलादर्शनात् तद्धेतुका-पूर्वस्यापि तत्रावश्यमभावः कल्पनीयः। एवमपि तत्र ग्रन्थपरिसमाप्तिर्दृश्यत इति स्फुटमेव मङ्गलस्यापूर्वद्वारारब्धकर्मपरिसमाप्तिजनकत्वपक्षे व्यतिरेक-व्यभिचारित्वमिति तात्पर्यम्।

ननु पूर्वं यथा नास्तिकाद्यारब्धकर्मसमाप्तिस्थले जन्मान्तरीयं मङ्गलं कल्पयित्वा व्यतिरेकव्यभिचारो निवारितस्तथात्रापि जन्मान्तरीयमङ्गलाधीनमपूर्वं कल्पयितव्यमिति नापूर्वद्वारा मङ्गलस्य समाप्तिसाधनत्वपक्षे व्यतिरेकव्यभिचारकल्पनावसर इति चेन्न। तथा सत्यागामिभवीयसमाप्तिमुद्दिश्यास्मिन् जन्मन्यपि केषाञ्चिच्छिष्टानां मङ्गलाचरणप्रवृत्तिप्रसङ्गात्। एवञ्च मङ्गलजन्यापूर्वस्यारब्धकर्मसमाप्तिं प्रति द्वारत्वे तयोः स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेनारब्धकर्मसमाप्तिं प्रति मङ्गलजन्यापूर्वस्य कारणत्वमित्येवंरीत्यैव कार्यकारणभावः कल्पनीयः। तथा सति समाप्त्यवच्छेदकीभूते नैषधकारीयशरीरेऽतीतजन्मसमाचरितमङ्गलजन्यापूर्वस्य स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेनाविद्यमानत्वाज्जन्मान्तरीयापूर्वस्वीकारेऽपि व्यभिचारस्तदवस्थ एव तिष्ठतीति न तेनापूर्वद्वारकत्वं समाप्तौ मङ्गलस्य कल्पयितुं योग्यमिति हृदयम्।

न चैवं विघ्नध्वंसद्वारापि नेदमङ्गं तत्रैव व्यभिचारादिति वाच्यम्। सति विघ्ने तद्ध्वंसद्वारा तस्याङ्गत्वात्। न चैवं प्रयाजादेरपि दुरितध्वंस एव द्वारं कल्प्यदुरितध्वंसतोऽपूर्वस्य लघुत्वात्।

इदानीं मङ्गलस्य विघ्नध्वंसद्वारारब्धकर्मसमाप्तिपक्षेऽपि व्यतिरेकव्यभिचारमाशङ्कते न चैवमित्यादि। तथाहि स्वतःसिद्धविघ्नविरहस्थले मङ्गलं विनाप्यारब्धकर्मणां परिसमाप्तिर्भवति। तत्र मङ्गलाभावेऽपि कार्योत्पत्त्या व्यतिरेकव्यभिचारः स्फुट एवास्ति। न च तत्र जन्मान्तरीयमङ्गलकल्पनया न व्यभिचार इति वाच्यम्। पूर्वप्रदर्शितापूर्ववन्मङ्गलजन्यविघ्नध्वंसस्यापि स्वोत्पत्त्यवच्छेदकीभूतशरीरावच्छेदेनैव समाप्तिकर्तृशरीरान्तर्भाविण द्वारत्वस्य कल्पनीयत्वात्। एवञ्च जन्मान्तरीयविघ्नध्वंसस्य स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन समाप्त्यवच्छेदकीभूतशरीरेऽसत्त्वेन व्यभिचारात्। अत्रोत्तरमारचयति। सति विघ्न इत्यादि। तथाच न तावत् सामान्यत आरब्धकर्मसमाप्तित्वावच्छिन्नं प्रति विघ्नध्वंसद्वारा मङ्गलस्य हेतुत्वमभिप्रेतम्। विघ्नविशिष्टतादृशसमाप्तिं प्रत्येव विशेषतो मङ्गलस्य विघ्नध्वंसद्वारा हेतुत्वं विवक्षितम्। विघ्नवैशिष्ट्यञ्च समाप्तौ स्वोत्तरत्वस्वावच्छेदकशरीरजन्यत्वैतदुभयसम्बन्धेन ग्राह्यम्। एवञ्च स्वतःसिद्धविघ्नविरहस्थलीयसमाप्तौ तद्भवीयमङ्गलजन्यविघ्नध्वंसाभावेन प्रोक्तसम्बन्धेन विघ्नवैशिष्ट्याभावात् तस्याः कार्यतावच्छेदकत्वानाक्रान्तत्वादिति ध्येयम्। कल्प्यदुरितध्वंसत इति।

प्रयाजाद्यङ्गयागस्थले तस्य दर्शादियागजन्यपरमापूर्वं प्रति विघ्नध्वंसद्वाराङ्गत्व-कल्पने परमापूर्वप्रतिबन्धकीभूतविघ्नः कल्पनीयः। अन्यथा प्रयाजादिना कस्य ध्वंसो भवेत्, प्रतियोगिविनिर्मोकेण ध्वंसासम्भवात्। कस्यचित् सलिलङ्गस्या-भावान्नानुमानतस्तत्स्थले विघ्नः प्रमाणितो भवतीति तत्कल्पनममूलकमेव स्यादिति भावः। लघुत्वादिति। तथाहि प्रयाजाद्यङ्गयागानां विघ्नध्वंसद्वारा दर्शादियागजन्यपरमापूर्वहेतुत्वे प्रतिबन्धकीभूतो विघ्नोऽवश्यं कल्पनीयः कल्प्य-विघ्नस्य च जन्यत्वेन तत्कारणीभूतं किञ्चिदपूर्वमपि यष्टरि कल्पनीयमित्य-पूर्वस्यावश्यं कल्पनीयत्वेन विघ्नध्वंसं परित्यज्यापूर्वद्वारा प्रयाजादीना-मङ्गत्वकल्पने कल्पनालाघवं परिस्फुटमस्तीति परमार्थः।

वस्तुतस्तु प्रायशो विघ्नसंशये तन्निश्चये वा नियमेन शिष्टानां मङ्गलाचरणे विघ्नाभाव एव द्वारत्वेनाभिमतः। निर्विघ्नं समाप्यतामिति कामनया तत्करणपक्षे श्रुतित एव द्वारत्वनिर्णयः। किञ्चापूर्वे द्वारत्वे लौकिकाङ्गत्वविरोधः क्लृप्तकारणादेव तदुत्पत्ते-रिन्द्रबाहुबन्धनवत्।

विघ्नध्वंसस्य द्वारत्वपक्षे स्वतःसिद्धविघ्नविरहस्थलीयसमाप्तौ व्यतिरेक-व्यभिचारवारणार्थं विघ्नविशिष्टसमाप्तिं प्रति मङ्गलाचरणजन्यविघ्नध्वंसस्य द्वारत्वं विवक्षितम्। तथापूर्वस्य द्वारत्वपक्षेऽपि तादृशसमाप्तिं प्रत्येव मङ्गलजन्यापूर्वस्य द्वारत्वं कल्पनीयमिति नैतत्पक्षेऽपि व्यभिचार इति चेन्नेत्याह। **वस्तुतस्त्विति।** तथाहि विघ्नज्ञानादेव समाप्तिसन्देहेन शिष्टानां मङ्गलाचरणदर्शनात् प्रथमोपस्थितविघ्नध्वंसस्य द्वारत्वसंभवे तदर्थम-दृष्टकल्पनाया अन्याय्यत्वादिति भावः। प्रयोगस्तु मङ्गलं विघ्नध्वंससाधनं विघ्नाजनकत्वे सति भ्रमाजन्यविघ्नज्ञानवत्पुरुषप्रवृत्तिविषयत्वादित्येवं बोध्यः। अनुमानादिव श्रुतेरपि समाप्तौ मङ्गलस्य विघ्नध्वंसद्वारकत्वं सिध्यतीत्याह। **निर्विघ्नं समाप्यतामित्यादि।** तथाच शिष्टाचारानुमितया विघ्नध्वंसकामो मङ्गलमाचरेदित्यादिश्रुत्या समाप्तौ मङ्गलस्य विघ्नध्वंसद्वारकत्वं पर्यवस्यति। निर्विघ्नं परिसमाप्यतामित्येवं कामनया शिष्टानां मङ्गलाचरणे प्रवृत्ततया-चारानुमितश्रुतेः परिशेषतः पूर्वोक्त आकारः सिध्यतीति परमार्थः।

यदुक्तं निर्विघ्नं परिसमाप्यतामिति कामनया शिष्टानां मङ्गलाचरणे प्रवृत्तिरिति तदप्रामाणिकं तादृशश्रुत्यादेरभावात्। एवञ्च सति शिष्टाचारानुमितश्रुतेर्निर्विघ्नपरिसमाप्तिकामो मङ्गलमाचरेदित्याकारकत्वा-

सिद्धं।। न श्रुतितो मङ्गलस्य विघ्नध्वंसद्वारकत्वं सिध्यतीति चेदत्राह। **किञ्चापूर्वं द्वारत्व** इत्यादि। तथाहि मङ्गलस्यारब्धकर्मपरिसमाप्तौ विघ्नध्वंसाद्वारकत्वेऽपूर्वद्वारकत्वं कल्पनीयम्। एवञ्च सति ग्रन्थपरिसमाप्तिरूपलौकिककार्येऽलौकिकस्य मङ्गलजन्यापूर्वस्य जनकत्वरूपमङ्गत्वमायाति। तच्च न सम्भवति। अलौकिकं लौकिके नाङ्गमिति तक्षाधिकरणविरोधात्। तथाच तस्य किमपि लौकिकमङ्गं कल्पनीयम्। लौकिकस्थले लौकिककारणादेव कार्योत्पत्तिदर्शनादिति मङ्गलस्य विघ्नध्वंसरूपलौकिकाङ्गद्वारेणैव समाप्तिसाधनत्वमवश्यमङ्गीकर्तव्यम्। **इन्द्रबाहुबन्धनवदिति**। अलौकिकं लौकिके नाङ्गमिति नियमाद् यथालौकिकस्येन्द्रबाहुबन्धनस्य लौकिककर्माजनकत्वं तथापूर्वद्वारकत्वे मङ्गलस्याप्यलौकिकस्य ग्रन्थपरिसमाप्तिरूपलौकिककार्यं प्रत्यजनकत्वमापद्येत। अतस्तस्य विघ्नध्वंसरूपलौकिकव्यापारद्वारैव समारब्धग्रन्थपरिसमाप्तिसाधनत्वं सोपपत्तिकमिति तात्पर्यम्।

ननु विघ्नसन्देहे कथं तन्नाशार्थं प्रवृत्तिर्दुरितध्वंसार्थिप्रवृत्तौ तन्निश्चयस्य हेतुत्वात् प्रायश्चित्तवदिति चेन्न। विघ्नसंशये निश्चये वा नियमेन शिष्टानां मङ्गलाचाराद् विघ्नज्ञानं प्रवर्तकम्। तादृशाचारानुमितविधिनापि विघ्नज्ञानवानारब्धसमाप्तिकामोऽधिकारी बोध्यते। प्रायश्चित्ते तु तन्निश्चयवांस्तथैव विधिबोधनात्। अतएवाधिकारिविशेषणम्। विघ्न इति तत्सन्देहे कथं प्रवृत्तिः, वैदिकेऽधिकारनिश्चयादेव प्रवृत्तेरित्यपास्तम्।

पूर्वं यदुक्तं तेन विघ्नध्वंससमानाधिकरणसमाप्तिर्मङ्गलाचरणोद्देश्यत्वेन प्राप्यते। तत्र बाधकमवतार्य निरस्यति। **ननु विघ्नसन्देह** इत्यादि। अयमत्र बाधकावतारेऽभिप्रायः। तथाच दुरितध्वंसहेतुत्वेन शास्त्रे प्रायश्चित्तं विहितमिति सकलशिष्टप्रसिद्धम्। प्रायश्चित्तस्थले दुरितनिश्चय एव तदधिकारत्वेन शास्त्रकारैर्विघोषितः। समाप्तिस्थले च विघ्नसंशयादपि शिष्टानां मङ्गलाचरणे प्रवृत्तिर्दृश्यते। एवञ्च दृष्टान्तदार्ष्टान्तिकयोरधिकारांशे वैषम्यान्न विघ्नध्वंसद्वारा मङ्गलस्य समाप्त्यङ्गत्वं युज्यत इति पूर्वपक्षाशयः। अत्र समाधत्ते। **न विघ्नसंशय** इत्यादि। अयमत्र स्वरसः। प्रायश्चित्तस्थले विधायकश्रुतेः प्रत्यक्षसिद्धत्वात् तदनुसारेण दुरितनिश्चयोऽधिकारत्वेन लभ्यते। मङ्गलाचरणस्थले पुनः प्रत्यक्षश्रुतेरभावाच्छिष्टाचारानुमितश्रुति-

विधानदात्री । शिष्टानाञ्च विघ्नसंशये तन्निश्चये वोभयथैव मङ्गलाचरणे प्रवृत्ततया तल्लिङ्गकश्रुतितोऽपि संशयनिश्चयसाधारणविघ्नज्ञानत्वेनैव विघ्न-ज्ञानस्य मङ्गलाचरणाधिकारिताऽवश्यं सिध्यतीति परमार्थः। **अतएवेति**। अस्येत्यपास्तमित्यग्रिमेणान्वयः। **अधिकारिविशेषणमिति**। अधिकार इति तदर्थः।

यतः प्रधानाधिकारिण एवाङ्गेऽधिकारो न स्वतन्त्रोऽङ्गत्वभङ्ग-प्रसङ्गात्। न च प्रधाने प्रारिप्सिते दुरितमधिकारिविशेषणं, विरोधात्। किन्तु समाप्तिकामना, सा च निश्चितैव।

**प्रधानाधिकारिण** इत्यादि। वैदिककर्मस्थले प्रधानकर्मणि यदधिकार-त्वेन वेदबोधितं स्यात् तदेवाङ्गकर्मण्यप्यधिकारः स्यात्, न तु तदतिरिक्तः कश्चिद् धर्मोऽङ्गकर्मण्यधिकारत्वेनापेक्षितो भवतीति भावः। नन्वेतेन प्रारब्धकर्ममङ्गलयोः किमायातमित्यत्राह। **न चेत्यादि**। तथाच प्रकृते च समारब्धत्वेनाभिमतं ग्रन्थनिर्माणमेव प्रधानं कर्म। तत्र न दुरितज्ञानवान् अधिकारी। अतो दुरितस्य तत्रानधिकारत्वात् तदङ्गकर्मणि मङ्गलेऽपि न दुरितं विघ्नो वाधिकारिविशेषणम्। अतो मङ्गलस्य वेदबोधित-कर्तव्यताकत्वेऽपि वैदिककर्मस्थलेऽधिकारनिश्चयस्य प्रवर्तकत्वेऽपि न विघ्न-संशयस्थले मङ्गलाचरणेऽप्रवृत्तिः प्रसज्येत। **प्रधान इति**। आरभ्य-त्वेनेप्सिते ग्रन्थनिर्माणे दुरितं विघ्नादिकम्। **अधिकारिविशेषणम्**। अधिकारः। **विरोधादिति**। विघ्नज्ञानसत्त्वे ग्रन्थनिर्माणेच्छैव न सम्भवति तादृशेच्छां प्रति विघ्नज्ञानस्य प्रतिबन्धकत्वादित्यर्थः। यदि दुरितज्ञानं प्रस्तुतग्रन्थनिर्माणात्मक-प्रधानकर्मणि नाधिकारिविशेषणं तदा किमन्यत् तदित्याकाङ्क्षायामाह। **किन्त्वित्यादि**। सा तु समाप्तिकामना चेत्यर्थः। **निश्चितैवेति**। समुत्पन्नायां समाप्तिकामनायां तन्निश्चयस्यावश्यम्भावाद् योग्यविभुविशेषगुणानामनिश्चित-सत्तानङ्गीकारात्। एवञ्च प्रधानाधिकारस्यैवाङ्गेऽप्यधिकारत्वान् मङ्गलकर्तुः स्वीयसमाप्तिकामनाया निश्चितत्वेनाधिकारनिश्चयस्य प्रवर्तकत्वपक्षेऽपि मङ्गलात्मकाङ्गकर्मानुष्ठाने न काचिदनुपपत्तिरिति ध्येयम्।

यत्त्वन्यत्र निश्चिताधिकारकर्तृत्वेऽपि मङ्गलं सन्दिग्धाधिकार-कर्तृकमेव, विघ्नसन्देहवतां शिष्टाचारानुमितवेदेन तथैव बोधनादिति, तन्न। विघ्नवत्त्वेनाधिकाराभावात् क्वचित्तन्निश्चयेऽपि प्रवृत्तेश्च।

ये खलु मङ्गलस्य विघ्नवत्पुरुषकर्तव्यत्वमङ्गीकृत्यापि विघ्नसन्देहस्थले मङ्गलाचरणं प्रामाणिकमिति वदन्ति तन्मतमुपन्यस्य निषेधति। **यत्त्वित्यादि**। अयमाशयः पूर्वपक्षे। मङ्गलस्य कर्तव्यतायां प्रत्यक्षश्रुतिर्नास्ति। शिष्टा मङ्गलमाचरन्तीति दृष्ट्वैव मङ्गलस्य कर्तव्यताप्रतिपादिका श्रुतिरनुमीयते। शिष्टाचारश्च विघ्नसन्देहेऽपि मङ्गले दृश्यते। अतः शिष्टाचारानुसारेण बिघ्नसन्देहवत्पुरुषकर्तव्यताप्रतिपादकत्वेन श्रुतिरनुमिता स्यात्। तस्माद् विघ्नसन्देहवत्पुरुषकर्तव्यत्वस्य मङ्गले श्रौतत्वेन न स्थलान्तरीयाधिकारनिश्चयदृष्टान्तेनात्रापि मङ्गलाचरणप्रयोजकत्वेन विघ्ननिश्चयः कल्पयितुं योग्यः। **अन्यत्रेति**। प्रायश्चित्तादावित्यर्थः। **निश्चिताधिकारकर्तृकत्वेऽपीति**। अहं पापीत्याकारकपापरूपाधिकारनिश्चयवत्पुरूषाचरितत्वेऽपीत्यर्थः। सन्दिग्धाधिकारकर्तृकमेव स्वीयसन्देहविषयीभूतविघ्नात्मकाधिकारवत्पुरुषकर्तव्यताकमेव। एतन्निरस्यति। **तन्नेत्यादि**। प्रदर्शितपूर्वपक्षस्तदैव समीचीनः स्याद् यदि मङ्गलाचरणे विघ्नस्याधिकारत्वं प्रमाणितं स्यात्। तदेव तु न। मङ्गलस्य समारब्धकर्माङ्गत्वेन प्रमाणसिद्धस्य विघ्नवत्पुरु-कर्तव्यत्वे समारब्धकर्माधिकारातिरिक्ताधिकारत्वेन तदङ्गत्वहान्यापत्तेः। समारब्धकर्मणि विरोधादेव विघ्नस्य नाङ्गत्वसम्भव इत्युक्तमधस्तात्। अपि च विघ्ननिश्चयस्थलेऽपि शिष्टानां मङ्गलाचरणे प्रवृत्तिदर्शनाद् विघ्नसन्देहस्य तदाचरणप्रवर्तकत्वे प्रत्यक्षविरोधापत्तेश्चेत्युत्तरपक्षाभिप्रायः।

अपि च शङ्कितानिष्टवारणार्थमपि प्रवर्तन्ते परीक्षका यथा सर्पादिदंशजन्यविषसंशये तन्नाशाय भेषजपानादौ। किञ्च फलस्य संशयेऽप्युपायत्वनिश्चयाद् यथा कृष्यादौ प्रवृत्तिस्तथा मङ्गलेऽपि। यदि च वृष्टयादौ सति कृष्यादितोऽवश्यं फलमिति तर्कात्तत्र प्रवृत्तिस्तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्तिः।

अनिष्टशङ्कयापि तन्निवारणार्थं प्रेक्षावन्तः प्रवर्तन्त इति दृष्टान्तेन विघ्नशङ्कास्थलेऽपि शिष्टानां मङ्गले प्रवृत्तिं समर्थयितुमाह। **अपि चेत्यादि**। ननु प्रतिबन्धकसंशयात् तन्निवृत्त्यर्थं प्रवर्तन्तां नाम शिष्टाः। पुनर्मङ्गलस्य प्रारब्धकर्मसमाप्तिसाधनत्वे समाप्तिसन्देहस्थले मङ्गलाचरणप्रवृत्तिर्नोपपद्यते। फलसन्देहस्य श्रौतकर्मणि प्रवृत्तौ बाधकत्वात्। दृश्यते च समाप्तिसन्देहेऽपि शिष्टानां मङ्गलाचरणे प्रवृत्तिरिति न समाप्तिफलकत्वं मङ्गलाचरणस्य इत्यत आह। **किञ्चेत्यादि**। तथा च फलसन्देहो न प्रवृत्तिबाधकः। सस्योत्पत्तिसन्देहेऽपि तत्साधननिश्चयवतां कृष्यादौ प्रवृत्तिदर्शनादिति भावः।

**ननु स्फ्यस्य भक्ताश्लेषनिमित्तकेज्यायामिष्टित्वेन दर्शधर्मत्वे सत्यतिदेशागतपूर्वदिनकर्तव्यदेवतावाहनस्याङ्गस्य स्फ्याश्लेषद्वार-संशयेऽननुष्ठानमुक्तं यथा कृष्णले द्वारबाधे। अतो विघ्नसंशयात् तद्ध्वंसद्वारसंशये कथं मङ्गलानुष्ठानमिति चेन्न।**

एतावत्पर्यन्तं फलाधिकारादिनिश्चयस्य प्रवर्तकत्वमित्यभिमन्वानैस्तत्तत्-संशयस्थले मङ्गलेऽप्रवृत्तिराशङ्किता। इदानीं द्वारनिश्चयस्य प्रवर्तकत्वमित्येवं भ्रमेण विघ्नसंशये मङ्गलाचरणेऽप्रवृत्तिराशङ्क्यते। **ननु स्फ्यस्येत्यादि।** स्फ्य इति काष्ठविनिर्मितः खड्गाकृतिर्यज्ञीयो द्रव्यविशेषः। अनेन चरुपाकस्थले ऽन्नादिकमालोड्यते। दर्शादियागे भक्तालोडनकाले भक्तं यदि स्फ्यद्रव्ये श्लिष्टं स्यात्तदेज्यानामकः कश्चिद् यागोऽनुष्ठीयेत। इज्यायागस्य चेष्टित्वं मीमांसासम्मतम्। प्रकृतिवद् विकृतिरित्यतिदेशाच्चासति विशेष-निर्देशे प्रकृतिभूतदर्शादियागानामङ्गानि तत्रातिदिष्टानि भवन्ति। प्रकृतियागे चाङ्गत्वेन पूर्वदिने देवतावाहनं विहितम्। इज्यायामपि विकृतेष्टावतिदेशात् तदेव देवतावाहनं पूर्वदिने प्राप्तं भवति। यदि द्वारसंशयेऽप्यङ्गानां प्रवृत्तिः स्यात् तदा दर्शयागात् पूर्वदिनेऽपि स्फ्यद्रव्ये भक्ताश्लेषसन्देहसम्भवात् पूर्वदिननिमित्तकस्य देवतावाहनस्येज्यायामप्यनुष्ठानं सम्भवति। वस्तुतश्च तन्न भवति। भक्ताश्लेषरूपद्वारनिश्चयस्यैवेज्याप्रवृत्तौ हेतुत्वात् पूर्वदिने च चरुपाकाभावेन स्फ्यद्रव्ये भक्याश्लेषासम्भवाद् दर्शारम्भदिन एव चरुपाकानन्तरं तादृशाश्लेषघटनात् तदानीञ्च पूर्वदिनरूपनिमित्ताभावेनातिदिष्टमपि देवतावाहनं यथा नानुष्ठेयं भवति तथा प्रकृतस्थलेऽपि विघ्नसंशये विघ्नध्वंसद्वारस्या-वश्यं संशयात् तत्स्थले मङ्गलाचरणमप्रवर्तितमेव स्यात्। अतो विघ्न-ध्वंसस्य द्वारत्वपक्षे विघ्नसंशयाच्छिष्टानां मङ्गलाचरणे प्रवृत्तिर्नोप-पद्यते। तथाहि मीमांसादर्शनस्य दशमाध्यायप्रथमपादे तृतीयसूत्रे तृतीयवर्णके उक्तंकाम्येष्टिकाण्डे—वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान्—इत्यनया श्रुत्या भ्रातृव्यक्षयकामनया कश्चिद् वैश्वदेवनामकश्चरुद्रव्यको यागो विहित इति। तदनन्तरञ्च तं बर्हिषदं कृत्वा शम्यया स्फ्येन व्यूहेदिदमहममुञ्चामुञ्च व्यूहामि यं द्विष्यात् तं ध्यायन्नित्यनया श्रुत्या वैश्वदेवयागावशिष्टचरुद्रव्यस्य कुशेषु संस्थापितस्य ब्रह्मादीनामृत्विजां कृते स्फ्येन विभागो विहितः। यदधो विमृज्येद् यच्च स्फ्य आश्लिष्येत् तद् विष्णवे उरुविक्रमायावद्येदित्यनया च श्रुन्या चरुविभागकाले यदि तद्द्रव्यस्य कश्चिदंशो भूमौ पतेत् स्फ्येन वा सह संश्लिष्टः स्यात् तदा तत्तदंशेन

वैष्णवयागोऽपि विहितः। अनयोर्द्वयोरेव यागयोरिष्टिविकृतित्वं बोध्यं तत्प्रकरणे पठितत्वात्। द्वितीययागस्य वैश्वदेवप्राकरणिकत्वात् तदङ्गानामत्रानुषङ्गः स्यात्। विश्वान् देवान् आवह इत्यनेन मन्त्रेण वैश्वदेवयागे देवतावाहनं कर्तव्यम्। इदमावाहनन्तु सामिधेनीतः परं प्रयाजात् पूर्वं कर्तव्यम्। चरुविभागस्तु पूर्वोक्तो यागसमाप्त्यनन्तरं कर्तव्यः। तदानीं स्फ्याश्लेषे सति वैष्णवयागस्य विधानमुक्तम्। वैष्णवेऽपि यागे वैश्वदेवयागाङ्गभूतं देवतावाहनमतिदेशात् प्राप्तं भवति। आवाहनकालस्तु पूर्वोक्त एव। स च स्फ्याश्लेषात् प्रागेव सम्भवति। अत्र शास्त्रसिद्धान्तः। अतिदेशप्राप्तत्वाद् वैष्णवयागे यदि देवतावाहनं स्यात् तदा तत्कालस्य तदावाहनानुपयोगित्वेन वैश्वदेवयागीयदेवतावाहनकाल एव वैश्वदेवैः सह विष्णोरप्यावाहनं भवेत्। आवाहनकाले च चरोः स्फ्याश्लेषाभावादागामिनस्तस्य संशय एव विष्णोरावाहने प्रयोजकः स्यात्। पश्चाच्चरुविभागकाले यदि तेनाश्लेषो न स्यात् तदा वैष्णवयागस्य प्राप्तिरेव न भवेत्। आहूतस्य च विष्णोरनादरेऽनिष्टमापद्येत। अतो वैष्णवयागे देवतावाहनस्यातिदेशप्राप्तस्यापि निषेध एव मीमांसकैः सिद्धान्तितः। एवञ्च द्वारसन्देहे वैष्णवयागस्थलेऽङ्गस्य देवतावाहनस्य यथा नानुष्ठानं तथा मङ्गलस्थलेऽपि विघ्नसंशये विघ्नध्वंसरूपद्वारसंशयस्याप्यवश्यम्भावात् तस्मिन् मङ्गलाचरणेऽप्यप्रवृत्तिरेव स्यात्।

द्वारसंशयेऽङ्गस्यानुष्ठानाभावमुक्त्वा द्वाराभावनिश्चये तमाह यथा कृष्णले द्वारबाध इति। तथाह्युक्तसूत्रस्य व्याख्यायां द्वितीयवर्णके प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्काम इत्यनया श्रुत्यायुष्कामस्य कृते प्रजापतिदेवतामुद्दिश्य शतेन कृष्णलैः स्वर्णमयैर्माषैश्चरुपाको विहितः। तस्यापीष्टिविकारत्वेनातिदेशप्राप्तावघातेनावश्यं सम्बन्धः स्यादिति पूर्वपक्षेऽवघातजन्यद्वारस्य वैतुष्यस्यात्रासम्भवेन द्वाराभावनिश्चयादवहननरूपाङ्गस्य कृष्णले निवृत्तिरिति सिद्धान्तितम्। अत्रेदमवधेयम्। प्रथमेन स्फ्याश्लेषसंशयजन्यदेवतावाहनबाधात्मकदृष्टान्तेन दार्ष्टान्तिके मङ्गलाचरणे विघ्नसंशयाद् बाध इवानेनाप्यवहननबाधदृष्टान्तेन तत्र बाध आपादयितुं योग्यो दार्ष्टान्तिके द्वारबाधनिश्चयस्यासम्भवात्। अपि तु द्वाराभावज्ञानत्वेनाङ्गबाधकत्वं व्यवस्थापयितुं द्वयो दृष्टान्तयोरुल्लेख इति।

नैमित्तिके हि निमित्तवानधिकारी, यथा 'भिन्ने जुहोती'त्यत्र पात्रभेदवांस्तथेहाश्लेषवानधिकारीति पूर्वदिने आश्लेषनिश्चयाभावाद् युक्तमननुष्ठानम्। अपि चेज्याकर्तव्यतानिश्चये तदङ्गानुष्ठानम्। न

चाश्लेषसंशये तन्निश्चयः पूर्वदिने। अतः प्रधानेऽधिकाराभावान्नाङ्गेऽधिकार इति नावाहनं पूर्वदिने। यदि च यदि न स्यादिति न्यायेन कुर्यात् तदानधिकृतकर्तृकत्वेन निष्फलं स्यात्। स्फ्याश्लेषे सतीज्याकर्तव्यतानिश्चयेऽपि नावाहनम्। पूर्वदिनस्याङ्गस्याभावादितीज्यायामावाहनबाध एव। मङ्गले तु विघ्नज्ञानवानधिकारीत्युक्तं तच्च संशयेऽप्यस्ति प्रधाने कर्तव्यतानिश्चयोऽस्त्येवेति द्वारसन्देहेऽपि युक्तमनुष्ठानम्। भविष्यद्विवाहादावाभ्युदयिकेऽपि

— द्वारसंशयेऽङ्गबाधोदाहरणरूपेण यत् स्फ्याश्लेषादिकमुक्तं तन्न समीचीनम्। स्फ्येन भक्ताश्लेषस्य न वैश्वदेवताके यागे द्वारत्वमपि तु निमित्तत्वमेव। निमित्तस्य च निश्चय एव नैमित्तिककर्मानुष्ठाने कारणम्। एवञ्च वैश्वदेवयागकाले चरुविभागस्यानागतत्वात् तत्प्रयोज्यः स्फ्येन चरुसंश्लेषोऽपि तत्कालेऽनागत एव। तथाच तदानीं स्फ्येन चरुसंश्लेषस्य निमित्तस्यापि निश्चयाभावान्न तज्जनितवैष्णवयागस्य प्राप्तिरस्तीति न तेन दृष्टान्तेन विघ्नसंशयप्रयोज्यविघ्नध्वंससंशये समारब्धकर्माङ्गस्य मङ्गलस्य विघ्नसंशयेऽननुष्ठानमापादयितुं शक्यमित्युत्तरग्रन्थतात्पर्यम्। **नैमित्तिके** इति] स्फ्याश्लेषनिमित्तप्रयोज्ये वैष्णवयाग इत्यर्थः। **निमित्तवानिति**। स्फ्याश्लेषरूपनिमित्तनिश्चयवानिति तदर्थः। नैमित्तिककर्मसु निमित्तनिश्चयस्याधिकारत्वे दृष्टान्तमाह। **यथा भिन्न** इत्यादि। प्रकारान्तरेण वैष्णवयागे पूर्वकालकर्तव्यदेवतावाहननिषेधं प्रतिपादयति। **अपि चेज्येत्यादि**। तथाहि वैश्वदेवयागीयदेवतावाहनसमये स्फ्येन चरुसंश्लेषस्य निश्चयासम्भवात् तदानीं वैष्णवयागात्मकप्रधानकर्मधर्मिककर्तव्यतानिश्चयस्यासम्भवान्न तदङ्गस्यातिदेशप्राप्तदेवतावाहनस्य कर्तव्यतानिश्चयो भवितुमर्हति। प्रधानकर्तव्यतानिश्चयस्याङ्गकर्तव्यतानिश्चयं प्रत्यपेक्षितत्वेन तत्काले तदभावात्। तथाच तत्र प्रधानानुष्ठानबाधेन देवतावाहनबाधवन्न मङ्गलस्य विघ्नसंशये सत्यननुष्ठानमापादयितुं योग्यम्। संशयनिश्चयसाधारणविघ्नज्ञानमात्रस्यैव मङ्गलाचरणकर्तव्यतानिश्चये हेतुत्वात् तदानीं सत्यपि विघ्नसंशये मङ्गलमनुष्ठेयमेवेति तात्पर्यम्। **इज्येति**। प्रदर्शितवैष्णवयाग इति तदर्थः। **पूर्वदिन** इति। वैश्वदेवयागीयदेवतावाहनकाल इत्यर्थः।

तज्ज्ञानवानधिकारी तथैवाचारात् ।

नन्वङ्गानां प्रधानविधिविधेयत्वम् । न च ग्रन्थादिसमाप्तौ प्रधानविधिरस्ति । न च तत्कर्तव्यताबोधकस्य लौकिकप्रमाणस्य शास्त्रमेकदेशो युज्यते तस्य तन्निरपेक्षत्वादिति चेन्न । अपूर्वजनकाङ्गानां तथात्वात् । आचारानुमितश्रुत्या प्रधानविधिं विनापि तदङ्गत्वविधानाच्च ।

यदुक्तं नैमित्तिके निमित्तनिश्चयवानेवाधिकारीति तद् दृष्टान्तप्रदर्शनेन पूर्वपक्षयित्वा निरस्यति । **भविष्यद्विवाहादावित्यादि ।** विवाहात् पूर्वमाभ्युदयिकश्राद्धं क्रियत इति प्रसिद्धमेवं त्रैवर्णिकेषु । तच्च विवाहनिमित्तकमेव । आभ्युदयिकं खल्वधिकारिपुरुषेण विवाहात् पूर्वं कर्तव्यम् । तत्काले चानिर्वर्तितत्वाद् विवाहस्य तत्सन्देहवतैवाभ्युदयिकमनुष्ठीयते । तथाच कथमिदं वक्तुं शक्यते नैमित्तिके कर्मणि सर्वत्र निमित्तनिश्चय एवाधिकार इति पूर्वपक्षाभिप्रायः । अत्र समाधत्ते । **तज्ज्ञानवानधिकारीत्यादि ।** आचारस्यापि धर्मे प्रमाणत्वात् तदनुसारेण तत्र निमित्तनिश्चयस्य परिहारेण तज्जानमात्रमेवाधिकारत्वेन कल्प्यते । विशेषस्थलं परित्यज्यैव नियमस्य शास्त्रसम्मतत्वात् । एवञ्च विवाहात् पूर्वमपि भविष्यद्विवाहस्य सन्देहात्मकज्ञानादेवाधिकारिपुरुषैर्विवाहात् पूर्वमाभ्युदयिकश्राद्धमनुष्ठातव्यमित्युत्तरपक्षाभिप्रायः । अत्रेदमवधेयम् । अयं तावद्ग्रन्थः केवलं पूर्वोक्तस्य नैमित्तिके निमित्तनिश्चयवदनुष्ठेयत्वस्य प्रसङ्गेनैव सङ्गमनीयो न पृथक् समारब्धकर्मणः पूर्वमनुष्ठीयमानस्य मङ्गलस्य प्रसङ्गेन ।

मङ्गलस्य समारब्धकर्माङ्गत्वं यत् प्रागुक्तं तत्र पूर्वपक्षमारचयति । **नन्वङ्गानामित्यादि ।** तथाच निश्चिततया वैदिकेष्वङ्गेष्ववहननादिषु प्रधानकर्मप्रतिपादकविधिसाकाङ्क्षैर्विधिभिर्विहितत्वं दृश्यते । तेन च यत्र यत्र वैदिकाङ्गत्वं तत्र प्रधानविधिसापेक्षविधिकत्वमित्येवं नियमस्य सिद्धौ प्रधानविधिसाकाङ्क्षविधिकत्वे वैदिकाङ्गत्वव्यापकत्वं सिद्धं भवति । एवञ्च सति व्यापकस्य प्रधानविधिसाकाङ्क्षविधिकत्वस्य विरहान्मङ्गलस्य वैदिकाङ्गत्वं निषिद्धं भवति । ग्रन्थविनिर्माणस्य रागतः परिप्राप्तत्वात् प्रयोजनविरहेण विधिकल्पनाया असम्भवात् । एवञ्च ग्रन्थनिर्माणात्मकप्रधाने विध्यभावान् मङ्गले प्रधानविधिसाकाङ्क्षविधिबोधितत्वाभावो निश्चितमेवास्ति । शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकत्वेन मङ्गलस्य यद्वैदिकाङ्गत्वं मीमांसकैर-

भिप्रेतं तदुक्तमधस्तादिति पूर्वपक्षतात्पर्यम् । **प्रधानविधिविधेयत्व-मिति ।** प्रधानविधिसाकाङ्क्षविधिबोधितकर्तव्यताकत्वमिति तदर्थः । यदुक्तं प्रधानकर्मकर्तव्यताबोधकविधिसाकाङ्क्षविधिकत्वं वैदिकाङ्गत्वव्यापक-मिति तत्र प्रथमविधिपदं न मुख्यमपि तु प्रधानकर्तव्यताबोधकप्रमाण-मात्रपरम् । प्रकृते च ग्रन्थनिर्माणस्थले मुख्यविधेरसत्त्वेऽपि तत्कर्तव्यताबोधकं लौकिकमनुमानादि प्रमाणमस्त्येव । तत्साकाङ्क्षेण समाप्तिकामो मङ्गल-माचरेदित्यादिविधिना मङ्गलस्य कर्तव्यत्वमपि प्रतिपादितमस्ति । तथाच वैदिकाङ्गत्वव्यापकं यत् प्रधानकर्तव्यताप्रतिपादकप्रमाणसाकाङ्क्षविधिकत्वं तदभावस्य मङ्गलेऽसत्त्वान्न तत्र वैदिकाङ्गत्वबाधः प्रमाणपदवीमधिरोहतीति पूर्वपक्षे सिद्धान्तमाह । **न च तदित्यादि ।** तथाहि यदुक्तं पूर्वपक्षिणा तत्त-दैव युक्तं स्याद् यदि मङ्गलकर्तव्यताबोधकं समाप्तिकामो मङ्गलमाचरेदिति श्रुत्यात्मकं प्रमाणं सहकारि स्यात् । तदेव तु नोपपद्यते । लौकिकप्रमाणस्य शास्त्रनैरपेक्ष्येणैव स्वार्थप्रतिपादकत्वात् । प्रकृते च श्रुतिसाहाय्यमन्तरेणैवा-नुमानादिना रागप्राप्तग्रन्थनिर्माणे प्रमातृकर्तव्यत्वस्य सिद्धत्वात् । न तेन प्रमाणेन सह मङ्गलकर्तव्यताप्रतिपादकश्रौतविधेः साकाङ्क्षत्वं सम्भवति । अपि च यद्याकाङ्क्षाभिप्रायरूपा स्यात्तदापि नानुमानेन श्रुतेः साकाङ्क्षत्वं सम्भवति लौकिकविषयेऽनुमानस्य निरपेक्षत्वात् । यद्यानुपूर्वीरूपा तदापि सानुपपन्नैव । अनुमानस्य शब्दानात्मकत्वेन तत्रानुपूर्व्याः प्रश्न एव नोदेतीत्युत्तरपक्षतात्पर्यम् ।

अत्र समाधानमाह । **नापूर्वेत्यादि ।** तथाहि यदुक्तं वैदिकाङ्गत्वं प्रधानविधिसापेक्षविधिकत्वव्याप्यं तन्न । अपूर्वजनकाङ्गत्वस्यैव तद्व्याप्यत्वात् । तथाच सामान्यतो वैदिकाङ्गत्वं प्रति प्रधानविधिसाकाङ्क्षविधिकत्वस्याव्यापक-त्वेन तदभावेऽपि मङ्गले वैदिकाङ्गत्वसत्त्वे बाधाभावः । मङ्गले शिष्टाचारानुमित-श्रुतित एव समारब्धकर्मजन्यसमाप्तिसाधनत्वरूपस्य प्रारब्धकर्मात्मकप्रधान-कर्माङ्गत्वस्य सिद्धत्वात् तत्र प्रधानविधिसापेक्षविधिकत्वस्याभावेन सामान्यतो वैदिकाङ्गत्वे प्रधानविधिसापेक्षविधिकत्वस्य व्यभिचारो बोध्यः ।

**अपूर्वजनकाङ्गानामिति ।** अपूर्वद्वारकवैदिकाङ्गानामित्यर्थः । **तथात्वादिति ।** प्रधानविधिसापेक्षविधिकत्वनियमादित्यर्थः । **प्रधानविधिं विनापीति ।** प्रारब्धकर्म-विधिं विनापीति तदर्थः । **तदङ्गत्वविधानादिति ।** शिष्टाचारानुमितश्रुत्या मङ्गलस्य प्रारब्धकर्मजन्यसमाप्तिजनकत्वप्रकारेण प्रतिपादनादिति भावार्थः । एवञ्च प्रारब्धकर्मविधिसापेक्षविधिकत्वाभाववति मङ्गले वैदिकाङ्गत्वसत्त्वाद् वैदिकाङ्गत्वे प्रधानविधिसापेक्षविधिकत्वस्य व्यभिचारः स्फुट एवेति बोध्यम् ।

अपि च प्रधानकर्तव्यताबोधकबोध्यकर्तव्यताकत्वं प्रयोजकम् । तच्चेहाप्यस्ति प्रतिबन्धकाभावस्य सकलकार्यहेतुत्वेन लौकिकप्रमाणस्यापि तत्सापेक्षत्वात् ।

यदुक्तं वैदिकाङ्गत्वं प्रति प्रधानविधिसापेक्षविधिकत्वं व्यापकमिति तत्रोभयोर्विधिपदयोः परिहारेण प्रधानकर्तव्यताबोधकसापेक्षबोध्यकर्तव्यताकत्वस्य लघुतरस्य वैदिकाङ्गत्वव्यापकत्वं प्रतिपादयन् मङ्गलस्य समारब्धकर्माङ्गत्वं समर्थयितुमाह। **अपि चेत्यादि** । ग्रन्थात्मकप्रधानकर्मणि विधेरसत्त्वेऽपि तत्कर्तव्यताप्रतिपादकमनुमानाद्यात्मकं प्रमाणं समस्ति । मङ्गलकर्तव्यताप्रतिपादिका शिष्टाचारानुमितश्रुतिस्तु अधस्तादुक्तैव। तथा च मङ्गलात्मकवैदिकाङ्गे ग्रन्थनिर्माणात्मकप्रधानकर्मकर्तव्यताबोधकानुमानादिप्रमाणसापेक्षश्रुतिरूपप्रमाणबोध्यकर्तव्यताकत्वस्य सत्त्वात् तस्य वैदिकाङ्गत्वव्यापकत्वं बोध्यम् । न च मङ्गलकर्तव्यताबोधकश्रुतेर्न प्रधानकर्तव्यताबोधकलौकिकप्रमाणसापेक्षत्वं तादृशप्रमाणं विनापि श्रुतेः स्वार्थबोधने निर्बाधत्वादिति वाच्यम्। तदुत्थाप्याशङ्कानिर्वर्तकत्वेन श्रुतेरपि तत्सापेक्षत्वात् । तथाहि लौकिकप्रमाणेन ग्रन्थनिर्माणे कर्तव्यत्वस्य बोधितत्वेऽपि सति प्रतिबन्धके कथं समाप्तिः स्यादित्येवमाशङ्कया विघ्ननिवृत्त्यर्थं मङ्गलकर्तव्यताप्रतिपादकश्रुत्या मङ्गलानुष्ठानेन श्रुतेर्लौकिकप्रमाणसापेक्षत्वं बोध्यम् । **प्रधानकर्तव्यताबोध्यकर्तव्यताकत्वमिति** । प्रधानकर्तव्यताबोधकसापेक्षप्रमाणबोध्यकर्तव्यताकत्वमिति तदर्थः। **लौकिकप्रमाणस्यापि तत्सापेक्षत्वादिति** । प्रधानकर्तव्यताबोधकलौकिकप्रमाणस्य मङ्गलकर्तव्यताबोधकश्रुतिनिवर्तनीयाकाङ्क्षोत्थापकत्वादिति भावार्थः । वस्तुतस्तु प्रधानकर्तव्येत्यादिपूर्वमूलानुसारेण सकलकार्यहेतुत्वेनालौकिकप्रमाणस्यापि तत्सापेक्षत्वादित्येवं मूलपाठ एव समीचीनः प्रतिभाति ।

ननु यागादिवत् प्रधानदेशकालान्वयस्तदङ्गे मङ्गले स्यादिति चेन्न। असाधारणेऽपूर्वजनके चाङ्गे तदन्वयात् । अतएव बद्धशिखत्वादौ न प्रधानदेशकालान्वयः । न च दुरिताभावे स्वतःसिद्धे साङ्गमङ्गलानुष्ठानं निष्फलमिति तद्वेदाप्रामाण्यम् ।

मङ्गलस्य समारब्धकर्माङ्गत्वे प्रधानीभूतसमारब्धकर्मणां यो देशो यश्च कालस्तद्देशकालावच्छेदेन विघ्नध्वंसजनकत्वमापादयन्नाह। **ननु यागादिवदित्यादि** । तथाहि दर्शादियागस्थले एतद्दृश्यते यत् प्रधानीभूतस्य दर्शादियागस्य यो

देशो यश्च कालस्तत्तदवच्छेदेनैव प्रयाजाद्यङ्गानां प्रधानजन्यपरमापूर्वजनकाङ्गापूर्वजनकत्वमिति तेन बैदिकाङ्गत्वं प्रति प्रधानकर्मोपयोगिदेशकालावच्छेदेनाङ्गापूर्वजनकत्वस्य व्यापकत्वं लभ्यते। एवञ्च व्याप्यस्य वैदिकाङ्गत्वस्य मङ्गले सत्वात् तत्रापि समारब्धकर्मात्मिकप्रधानकर्मदेशकालावच्छेदेन फलजनकत्वमवश्यमेव स्यादिति पूर्वपक्षाशयः। **प्रधानदेशकालान्वय** इति। प्रधानकर्मोपयोगिदेशकालसहकारेण फलजनकत्वमित्यर्थः। अत्र समाधानमाह। **न असाधारणेत्यादि**। तथाहि यत्र यत्र वैदिकाङ्गत्वं तत्र प्रधानकर्मोपयोगिदेशकालावच्छेदेन फलजनकत्वमिति नियमो न सम्भवति, कृष्यादिकर्माङ्गभूतकारीरीप्रभृतियागे व्यभिचारित्वात्। कृष्यादिकर्मोपयोगिनो देशात् कालाद्वा भिन्नेऽपि देशे काले वानुष्ठितस्य कारीरीप्रभतियागस्य कृष्यादिप्रतिबन्धकीभूतपार्थिवक्षोभनिवृत्तिद्वारा तज्जनकत्वस्य तत्र स्वीकृतत्वात्। तथाच तत्र तादृशफलजनकत्वाभाववति यागे वैदिकाङ्गत्वस्य सत्त्वेन व्यभिचारः स्फुट एव। अतोऽसाधारणत्वे सत्यपूर्वजनकत्वे सति वैदिकाङ्गत्वे एव तत्तद्देशकालावच्छेदेन फलजनकत्वस्य व्याप्तिः स्वीकर्तव्या। एवाञ्चापूर्वजनकाङ्गत्वस्य मङ्गलेऽसत्त्वान्न तत्र प्रारब्धकर्मात्मकप्रधानकर्मोपयोगिदेशकालावच्छेदेन विघ्नध्वंसरूपफलजनकत्वमापादयितुं शक्यम्। हेतौ विशेषणविधयासाधारणत्वस्याप्रवेशेऽपूर्वजनकवैदिकाङ्गत्वमेव व्याप्यत्वेनाभिमतं भवति। तच्चासम्भवि। प्रधानदेशकालावच्छेदेन स्वफलाजनके शिखाबन्धनादावपूर्वजनकवैदिककर्माङ्गत्वस्य सत्त्वेन व्यभिचारः स्यात्। असाधारणत्वप्रवेशे च स निरस्तो भवति, सकलकर्मसाधारणाङ्गभूतस्य शिखाबन्धनस्यासाधारणाङ्गत्वासत्त्वादिति तात्पर्यम्। शिखाबन्धनादौ प्रधानकर्माङ्गीभूतदेशकालयोरनन्वयमाह। **अत एवेत्यादि**। असाधारण इति। वामागमविहिताङ्गभिन्ने एकाधिककर्मानुपयोगिनीत्यर्थः।

मङ्गलस्य विघ्नध्वंसद्वारा प्रारब्धकर्मसमाप्तिजनकत्वे मङ्गलविशेषस्य वैफल्यं कथयंस्तत्कर्तव्यताप्रतिपादकश्रुतेरप्रामाण्यमाशङ्कते। **न च दुरिताभाव** इत्यादि। तथाहि यत्र प्रधानकर्मानुष्ठानस्थले स्वसामग्र्यभावात् कर्तरि विघ्नो नोत्पन्नस्तत्र सम्यगाचरितमङ्गलस्य विघ्नध्वंसात्मकफलानुपधायकत्वेन विघ्नध्वंसद्वारा प्रारब्धकर्मसमाप्तिसाधनत्वप्रतिपादकवेदस्याप्रामाण्यमेव स्यात्। विघ्नध्वंसं प्रति प्रतियोगिविधया विघ्नस्यापि कारणत्वात् तदत्यन्ताभावस्थले मङ्गलस्य विघ्नध्वंसोपधायकत्वं कथमपि न सम्भवति। तत्कर्तव्यताबोधकवेदेन च विघ्नध्वंसजनकत्वेन मङ्गलस्य कर्तव्यताबोधनात् तादृशफलासम्भवेन तद्वेदस्याप्रामाण्यमवश्यमेव स्यादिति पूर्वपक्षतात्पर्यम्। **दुरिताभावे विघ्ना-**

भावे, **स्वतःसिद्धे** स्वसामग्र्यभावप्रयोज्ये। कार्याभावं प्रति सामग्र्यभावस्य प्रयोजकत्वं प्रसिद्धमेव। तथा च विघ्नसामग्र्यभावलिङ्गेन विघ्नाभावस्यानुमानमत्र विवक्षितं बोध्यमं यथाश्रुतस्यासङ्गतत्वात्। नव्यनैयायिकनये कस्यापि वस्तुनः स्वतःसिद्धत्वानुपगमात्। **निष्फलमिति**। अव्यवहितपूर्ववृत्तित्वसम्बन्धेन फलविशिष्टं यत् तदन्यदिति तदर्थः।

लोकावगतकारणे हि दुरिते सति वेदेन तस्य तद्ध्वंसजनकत्वं बोध्यते न तु तदुल्लङ्घ्य। अत एव तत्त्वज्ञानवतो भोगार्थं निषिद्धानुष्ठानं दोषाभावान्नाधर्मजनकमिति न तद्वेदाप्रामाण्यम्।

अत्र समाधानमाह। **लोकावगतकारणे हि** इत्यादि। तथाच विघ्नध्वंसस्य कार्यमात्रं प्रति यज्जनकत्वं तल्लौकिकप्रमाणसिद्धमेव। प्रकृतेऽपि विघ्नध्वंसस्य प्रारब्धकर्मसमाप्त्यात्मककार्यं प्रति कारणत्वं लोकावगतमेव। लौकिकं प्रमाणञ्च सति विघ्ने तन्नाशस्यैव कार्यसाधनत्वं स्थापयति, न पुनरसत्यपि विघ्ने तन्नाशस्य। एवञ्च शिष्टाचारानुमितश्रुतेरपि तदनुसारेणैव सति विघ्ने तन्नाशद्वारा मङ्गलस्य समाप्तिसाधनत्वबोधकत्वान्न स्वतःसिद्धविघ्नविरहमङ्गलमवलम्ब्य निर्विघ्नसमाप्तिकामो मङ्गलमाचरेदिति श्रुतेरप्रामाण्यमापादयितुं योग्यमिति तात्पर्यार्थः। **लोकावगतकारण** इति। लोकावगतं कारणं यत्र तस्मिन् स्थल इत्यर्थः। **हि** निश्चितम्। **तस्य** मङ्गलादेः। **तद्ध्वंसजनकत्वं** विघ्नाद्यात्मकदुरितध्वंसजनकत्वं वेदेन बोध्यत इत्यन्वयः। **न तु तदुल्लङ्घ्य**। न लोकावगतकारणस्थलं परिहाय मङ्गलस्य दुरितध्वंसजनकत्वं वेदेन बोध्यत इति भावः। अथवा लोकावगतकारणं यद् विघ्नध्वंसरूपं तत्प्रतियोगिनि। दुरिते सति इत्यन्वयः। न तु तदुल्लङ्घ्य लोकावगतकारणप्रतियोगिनं विघ्नं विनेत्यर्थः। दृष्टान्तप्रदर्शनेनैतत् समर्थयितुमाह। **अत** एवेत्यादि। तथाहि निषिद्धानुष्ठानस्याधर्मजनकत्वं वेदप्रमाणसिद्धम्, न कलञ्जं भक्षयेदित्यादिश्रुत्या निषिद्धस्य कलञ्जभक्षणादेरधर्मजनकत्वस्य प्रतिपादितत्वात्। तत्त्वज्ञानवता पुरुषेण यथाप्रारब्धं कृतेऽपि कलञ्जभक्षणे न तेन तस्य प्रत्यवायो भवति रागादिदोषाभावादिति प्रसिद्धमेव। एवमपि यथा कलञ्जभक्षणादेरधर्मजनकत्वप्रतिपादकश्रुतेरप्रामाण्यं नायाति सति रागादिदोषे निषिद्धकर्मणामधर्मजनकत्वस्यैव न कलञ्जं भक्षयेदित्यादिश्रुत्या बोधनात् तथा मङ्गलादेः सत्येव विघ्ने तद्ध्वंसजनकत्वस्य निर्विघ्नसमाप्तिकामो मङ्गलमाचरेदित्यादिश्रुत्या प्रतिपादनान्न तच्छ्रुतेर-

प्रामाण्यमिति दृष्टान्तग्रन्थतात्पर्यम् । **दोषाभावादिति**। रागद्वेषमोहा दोषास्तेषामभावादित्यर्थः।

**प्रमाणान्तरात् स्वतःसिद्धदुरिताभावावगतौ मङ्गलाकरणे नित्यवदनुष्ठानं शिष्टानां भज्येतेति चेन्न । विघ्नज्ञानवतो नित्यवदनुष्ठानादिति सम्प्रदायः ।**

कर्मसमारम्भस्थलानां सर्वत्र तत्पूर्वं मङ्गलमनुष्ठेयमिति भ्रमेण पूर्वपक्षमुपस्थापयति । **प्रमाणान्तरादिति** । पूर्वोक्तव्याख्यानुसारेणैतल्लभ्यते यद् विघ्नात्यन्ताभावस्थले कर्मसमारम्भात् पूर्वं मङ्गलं कर्तव्यतया न श्रुतिबोधितं तादृशस्थले विघ्नध्वंसात्मकफलस्यासम्भवेन मङ्गलस्य निष्प्रयोजनत्वात् । एवञ्च सति विघ्नात्यन्ताभावस्थले निष्प्रयोजनतयाकर्तव्यत्वेन समारब्धकर्मस्थले मङ्गलस्य नित्यवदनुष्ठानं व्याहतं स्यादिति पूर्वपक्षाशयः। अत्र समाधानमाह । नेत्यादि । तथाहि समारब्धकर्मस्थले मङ्गलं नित्यवदनुष्ठेयमिति यत् पूर्वपक्षिणो मतं तद्भ्रान्तम् । विघ्नज्ञानवता पुरुषेणैव मङ्गलस्य कर्तव्यतया श्रुतिबोधितत्वान्न कर्मारम्भस्थले नित्यकर्मणामनुष्ठानवन्मङ्गलस्यापि सर्वत्र कर्तव्यत्वमिति सिद्धान्तग्रन्थतात्पर्यम् ।

**मैवम् । मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेः । न च तेन विनापि सिध्यतस्तदङ्गम् । न च जन्मान्तरीयं तत्, जन्मान्तरीयग्रन्थादिकमुद्दिश्य शिष्टैस्तदकरणात् ।**

विघ्नध्वंसद्वारा मङ्गलं समाप्तिजनकमिति मतं दूषयति। **मैवं मङ्गलमित्यादि**। तथाहि मङ्गलजन्यविघ्नध्वंसस्य द्विधा समाप्तिकारणत्वं भवितुमर्हति। प्रथमं तावदवच्छेदकतासम्बन्धेन समाप्तिं प्रति स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन मङ्गलजन्यविघ्नध्वंसः कारणमिति। द्वितीयं तु आत्मगतप्रत्यासत्त्याश्रयतासम्बन्धेन समाप्तिं प्रति तेनैव सम्बन्धेन मङ्गलजन्यविघ्नध्वंसः कारणमिति । व्यभिचारमाशङ्क्य प्रथमं निषेधति । **मङ्गलं विनापीत्यादि** । भ्रान्तनास्तिकादिकृतग्रन्थानामैहिकमङ्गलं विनापि समाप्तिर्भवतीति प्रसिद्धमेवास्ति । तत्रावच्छेदकतासम्बन्धेन समाप्त्याश्रये नास्तिकादिशरीरे स्वोत्पत्त्यवच्छेदकत्वसम्बन्धेन मङ्गलजन्यविघ्नध्वंसो नास्तीति व्यतिरेकव्यभिचारान्मङ्गलजन्यविघ्नध्वंसस्य समारब्धकर्मपरिसमाप्तिकारणत्वं न सम्भवतीति भावः। तत्र जन्मान्तरीयं मङ्गलं स्वीकृत्य समाप्तिकर्तृशरीरे विघ्नध्वंसः कल्पनीयः। तथाच ग्रन्थनिर्माणात्मकसमारब्धकर्मसमाप्त्यवच्छेदकीभूते नास्तिकादीनां वर्तमानशरीरे स्वोत्पत्त्यवच्छेद-

कत्वसम्बन्धेन मङ्गलजन्यविघ्नध्वंसस्य सत्त्वान्न व्यभिचार इत्यत्राह। **न च तेन विनापीत्यादि।** तथाहि यदुक्तं जन्मान्तरीयशरीरावच्छेदेनानुष्ठितान्मङ्गलाद् वर्तमानशरीरे विघ्नध्वंसोत्पत्तिस्तन्न सम्भवति। विघ्नध्वंसात्मककार्याधिकरणे नास्तिकादीनां वर्तमानशरीरेऽव्यवहितपूर्वक्षणावच्छेदेन मङ्गलस्यासत्त्वाद् व्यभिचारेण विघ्नध्वंसमङ्गलयोस्तादृशकार्यकारणभावकल्पनाया एवान्याय्यत्वात्। मङ्गलानुष्ठानं खलु क्रियात्मकं तच्चावश्यमेव पञ्चमक्षणवृत्तिध्वंसप्रतियोगि स्यात्। तथाच चिरपूर्ववर्तिपूर्वजन्मशरीरावच्छेदेन कृतस्य मङ्गलस्य तच्छरीरे एव विनाशावश्यम्भावाज्जन्मान्तरीयशरीरे तस्यानुवृत्त्यसम्भवादिति तात्पर्यम्। तेन **विनापीति।** मङ्गलेन विनापि इत्यर्थः। **सिध्यत इति।** वर्तमानशरीरावच्छेदेनोत्पद्यमानतयाभिमतस्य विघ्नध्वंसस्येत्यर्थः। तत् मङ्गलम्। अङ्गम् हेतुः। द्वितीये न व्यभिचार इत्याशङ्कते। **न च जन्मान्तरीयमित्यादि।** तथाहि द्वितीयकल्पे आत्मनिष्ठप्रत्यासत्त्यैव विघ्नध्वंसमङ्गलयोः कार्यकारणभावः कल्पितोऽस्ति। एवञ्च जन्मभेदेऽप्यात्मन एकत्वान्नास्तिकादिकृतग्रन्थपरिसमाप्तिस्थले समाप्त्यधिकरणीभूतनास्तिकात्मनि जन्मान्तरसमनुष्ठितमङ्गलजन्यविघ्नध्वंसस्य विद्यमानत्वाज्जन्मान्तरीयमङ्गलकल्पने विघ्नध्वंसस्य प्रारब्धकर्मसमाप्तिं प्रति न व्यभिचार इति पूर्वपक्षाशयः। एतन्निरस्यति। **जन्मान्तरीयेत्यादि।** तथाहि यद्येकशरीरे समाचरितमङ्गलाच्छरीरान्तरे फलोत्पादः स्वीकरणीयः स्यात्तदा शिष्टैरप्यागामिविघ्नध्वंसार्थं वर्तमानशरीरे मङ्गलमनुष्ठेयं स्यात्। तत्तु न दृश्यते। शिष्टैः वर्तमानशरीरावच्छेदेन फलोत्पत्त्यर्थमेव सर्वदा तदाचरणात्। असति प्रतिबन्धके वैदिककर्मणामविलम्बेन फलोत्पादस्यैव शिष्टैरङ्गीकारादिति निरसितुरभिप्रायः।

ननु यथा पुत्रेष्टौ कर्मसाद्गुण्ये ऐहिकफलाभावे आमुष्मिकं फलं तथा साङ्गेऽपि मङ्गले यत्र न फलं तत्रामुष्मिकफलमिति चेन्न। तत्र पुत्रमात्रस्य कामनाश्रवणात्। इह तु प्रारिप्सितसमाप्तिकामनया मङ्गलाचार इति तथैव वेदानुमानात् कारीरीवदासन्नसमयारब्धसमाप्तिः फलम्।

पूर्वजन्मकृतमङ्गलस्य समारब्धकर्मसमाप्तिसाधनत्वं प्रतिपादयितुं दृष्टान्तप्रदर्शनेन पूर्वपक्षमुपस्थापयति। **ननु यथेत्यादि।** तथाहि कदाचित् सकलेनाङ्गेन सह समनुष्ठितायामपि पुत्रेष्टौ यागकर्तुस्तज्जन्मनि पुत्ररूपफलस्यान-

वाप्तिर्दृश्यते। तत्र तदिष्टेरागामिजन्मसम्बन्धिपुत्रफलेन सफलत्वं मीमांसकैः स्वीकृतम्। तथा नास्तिकादिसमारब्धकर्मसमाप्तिस्थलेऽपि पूर्वजन्मानुष्ठितमङ्गलजन्यविघ्नध्वंसस्यात्मनिष्ठप्रत्यासत्त्या समारब्धकर्मसमाप्तिसाधकत्वं स्यादिति पूर्वपक्षाशयः। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यप्रदर्शनेनैतन्निरस्यति। न तत्रेत्यादि। अयमभिप्रायः। पुत्रकामः पुत्रेष्ट्या यजेतेति न श्रुतिवाक्यमेव पुत्रात्मकफलवत्तया तदिष्टेः पुत्रार्थिकर्तव्यतां प्रमाणयति। तत्र खलु कालविशेषाविशेषितस्यैव सामान्यतः पुत्रस्य फलत्वेन कीर्तनमस्ति। आगामिभवीयपुत्रेऽपि पुत्रत्वसत्त्वादैहिकपुत्राभावे सति तादृशपुत्रात्मकफलेन जन्मान्तरानुष्ठिततदिष्टेः सफलत्वसम्भवात्तत्र तादृशफलकल्पनं युक्तमेव। वैदिककाम्यकर्मणां सम्भवति सफलत्वे निष्फलत्वकल्पनाया अन्याय्यत्वात्। मङ्गलाचरणस्थले तु समारब्धकर्मसम्बन्धेनैव शिष्टानां मङ्गलाचरणे प्रवृत्तिर्दृश्यते। तादृशशिष्टाचारानुमितश्रुतेरपि समारब्धकर्मसमाप्तिसाधकत्वेनैव मङ्गलकर्तव्यताप्रतिपादकत्वस्य कल्पनायोग्यत्वान्न तत्र अनारब्धस्याग्रिमभवीयकर्मणः समाप्तिसाधकत्वं तादृशश्रुतेः क्षोदक्षममिति। कारीरीयागस्थले यथासन्नसमयसम्बन्धिवृष्टिः फलं तथात्रापि समारब्धकर्मसमाप्तिः फलमेव कल्पनार्हम्। न तदतिक्रमेणागामिभवीयकर्मसमाप्तिसाधकत्वमपि शक्यकल्पनमिति ध्येयम्।

नन्वासन्नसमयस्तत्सम्बन्धो वा न मङ्गलजन्य इति समाप्तिमात्रं जन्यं, तच्चैहिकामुष्मिकसाधारणमिति चेन्न। आसन्नसमयस्य स्ववृत्तिसमाप्त्युपलक्षकत्वात्। अन्यथा कारीर्यपि नासन्नसमयफला स्यात्। तस्माद् व्यभिचारान्न तदङ्गमिति।

यदुक्तं मङ्गलस्य स्वसन्निहितसमयवृत्तित्वेन कर्मसमाप्तिरूपफलजनकत्वं तत्र समाप्तिविशेषणीभूतो यः सन्निहितसमयः स न मङ्गलजन्यः सूर्यपरिस्पन्दनात्मकस्य समयस्य मङ्गलजन्यत्वे प्रमाणाभावात्। एवञ्च विशेष्यीभूता या समाप्तिः सैव मङ्गलजन्यत्वेन कल्पनीया। अत आमुष्मिकसमाप्तावपि जन्यतावच्छेदकीभूतसमाप्तित्वसत्त्वात् तादृशफलमुद्दिश्यापि मङ्गलमाचरणीयमित्याह। नन्वासन्नसमय इत्यादिना। अत्रोत्तरमाह नेत्यादि। तथाह्याधेयत्वसम्बन्धेन मङ्गलसन्निहितसमयस्य समाप्तावपुलक्षणत्वम्। तत्रोपलक्षणीभूतसमये मङ्गलजन्यत्वस्यान्वयाभावेऽपि तादृशोपलक्षणस्यामुष्मिकसमाप्तावसत्त्वान्न तन्मङ्गलस्य फलम्। उपलक्षणेन सन्निहितसमयेनामुष्मिकसमाप्तेरनुपलक्षितत्वात्। उपलक्षणस्य पदान्तरार्थान्वयित्वे व्यावर्तकत्वस्य

सर्ववादिसम्मतत्वात् । एवञ्च समाप्तित्वसत्त्वेऽप्युपलक्षणासम्बन्धित्वान्नामुष्मिकसमाप्तेर्मङ्गलफलत्वमिति हृदयम् । एतदुपसंहरति । **तस्मादिति** । तथाच प्रमत्तनास्तिकाद्यनुष्ठितकर्मसमाप्तिस्थले मङ्गलजन्यविघ्नध्वंसस्य व्यतिरेकव्यभिचारित्वान्न मङ्गलं स्वजन्यविघ्नध्वंसद्वारा समारब्धकर्मसमाप्तिजनकत्वेन तदङ्गमिति तात्पर्यार्थः ।

अन्ये तु मङ्गलं प्रधानमदृष्टद्वारारब्धकर्मसमाप्तिः फलम् । तत्कामोऽधिकारी । क्वचित्तु फलाभावः कर्मादिवैकल्यात् कारीरीवत् ।

इतः पूर्ववर्तिभिर्ग्रन्थैर्मङ्गलमारब्धकर्मस्वङ्गमिति मतमुपन्यस्य तन्निराकृतमिदानीं मङ्गलं प्रधानमेव कर्मेति मतमुपन्यस्यति **अन्ये तु मङ्गलमित्यादि** । अङ्गत्ववादिनां मते तु समारब्धकर्मजन्या या समाप्तिः सैव विघ्नध्वंसद्वारा मङ्गलस्य फलत्वेनाभिप्रेतासीत् । एतन्मते तु मङ्गलस्य प्रधानकर्मत्वेन तस्यारब्धकर्मजन्यसमाप्तिजनकत्वं न सम्भवति । तादृशसमाप्तिजनकत्वे मङ्गलस्यारब्धकर्माङ्गत्वमपरिहार्यं स्यात् । कर्मान्तरजन्यफलनिर्वाहकत्वस्य कर्मान्तराङ्गत्वं प्रति नियतत्वात् । अपि तु समारब्धकर्मोत्पत्तिरेव फलम् । तदपि मङ्गलजन्यापूर्वद्वारा बोध्यम् । **समाप्तिपदमुत्पादपरमिति** बोध्यम् । नन्वेवं यदि स्वजन्यादृष्टद्वारा समारब्धकर्मोत्पत्तिरेव मङ्गलस्य फलं स्यात्तदा विघ्ननिवृत्त्यर्थं शिष्टानां मङ्गलाचरणे प्रवृत्तिर्न स्यात् तस्य मङ्गलाजन्यत्वादिति चेदत्राह **तत्कामोऽधिकारीति**। तथा च समारब्धकर्मोत्पादकामनाया एवाधिकारत्वेन तादृशापत्तेरेतन्मते इष्टत्वादिति भावः । **क्वचित्तु फलाभाव इत्यादि**। ननु मङ्गलस्य यत् समारब्धकर्मोत्पत्तिफलकत्वमुक्तं तन्न सम्भवति स्थलविशेषे कृतेऽपि मङ्गले समारब्धकर्मण उत्पत्तेरदर्शनाद् वैदिककर्मणां फलावश्यम्भावनियमादिति चेन्न । तत्रत्यमङ्गलाचरणस्यावश्यं विकलत्वात् । स्थलविशेषे कारीर्यादियागे कृतेऽपि वृष्टयात्मकफलादर्शने वैकल्यकल्पनायाः सर्ववादिसम्मतत्वादिति भावार्थः । **प्रधानमिति** । अङ्गभिन्नमित्यर्थः। **आरब्धकर्मसमाप्तिरित्यत्र** समाप्तिपदमुत्पत्तिपरं बोध्यम् । यथाश्रुतार्थकत्वेऽङ्गत्वनिषेधव्याहतेः । मङ्गलस्यारब्धकर्मजन्या या समाप्तिस्तज्जनकत्वे आरब्धकर्माङ्गत्वस्यावश्यम्भावात् ।

न चान्यदापि करणम् । नियतकालीनतादृशाचारेण फलवत्-कर्मारिप्समानस्तत्समाप्तिकामो मङ्गलमाचरेदिति श्रुत्यारम्भसमय-कर्तव्यताबोधनात् । यथा अग्नावैष्णवमेकादशकपालं चरुं निर्वपेद्दर्शपौर्णमासावारिप्समान इति श्रुत्यारम्भणीयेष्टेः प्रधानाया दर्शारम्भसमयकर्तव्यत्वं कामनोपाधिकार्यत्वेऽप्यारम्भसमये नियतमनुष्ठान-मारब्धकर्मसमाप्त्यर्थिनोपायत्वेनावश्यं तदनुष्ठानात् । न च काम्यत्वे परिसमाप्तिकामनां विना फलवत्कर्मारम्भेऽपि तदनुष्ठानं न स्यादिति वाच्यम् । समाप्तं कर्म फलायालमिति फलार्थिनः समाप्तौ कामनावश्यम्भावादिति ।

न चैवं मङ्गलं यदि समारब्धकर्मणोऽनङ्गं स्यात्तदा तेन सह सम्बन्धाभावात् कर्मान्तरमिव मङ्गलमपि समारब्धकर्मणः पूर्वं पश्चाद्वा करणीयं स्यादिति पूर्वपक्षयति **न चान्यदापि करणमिति**। एतन्निषेधति न चेति। एतच्च करणमित्यन्वयि। तथा च पूर्वोक्तापत्तिर्न युक्तेति भावार्थः। तादृशापत्तेरयुक्तत्वे हेतुमाह **नियतकालीनेत्यादि**। तथाहि न ह्यारब्धकर्मणा मङ्गलस्य सर्वथासम्बन्धत्वमारब्धकर्मजन्यसमाप्तिं प्रति तस्याहेतुत्वेऽप्यारब्धकर्मणः समुत्पत्तौ हेतुत्वस्याङ्गीकारात्। अनन्यथासिद्धत्वविशिष्टनियतपूर्ववर्तित्वस्य हेतुतारूपत्वेन समारब्धकर्मणामुत्पत्तेः पूर्वं मङ्गलस्यावश्यं करणीयत्वात्। ननु मङ्गलस्य समारब्धकर्मोत्पत्तिहेतुत्वं कथं निर्णीतं स्यादित्यत्राह **नियतकालीनतादृशेत्यादि**। तथाच कर्मारम्भपूर्वकाले नियतरूपेण शिष्टानां मङ्गलाचरणदर्शनात्तेन फलवत्कर्मारिप्समानस्तादृशकर्मोत्पत्तिकामो मङ्गलमाचरेदिति श्रुतिरनुमिता भवति। तस्याञ्च श्रुतौ कर्मोत्पत्तिकामनाया अधिकारत्वेनोल्लेखात् कामनाविषयस्यैव सर्वत्र श्रौतकर्मणः फलत्वात् तया श्रुत्या मङ्गलस्यार्थतो कर्मोत्पत्तिहेतुत्वमपि प्रमाणितं भवतीति भावार्थः। न केवलं कर्मोत्पत्तिहेतुत्वप्रतिपादनद्वारैव मङ्गलस्य समारब्धकर्मपूर्वकालीनत्वं प्रमाणितमपि तु कालविशेषोल्लेखादपि। तथाहि श्रुत्यन्तर्गतेनारिप्समानपदेन कर्मारम्भेच्छासमानकालीनत्वस्य मङ्गलाचरणे कथनादारम्भेच्छायाश्चारम्भपूर्ववर्तित्वात् तत्समानकालीनत्वे मङ्गलस्यापि कर्मारम्भसमयपूर्ववर्तित्वं फलतः कथितमेव स्यादिति भावार्थः। प्रोक्तं मतं समर्थयितुं दृष्टान्तमपस्थापयति **यथा**

**अग्नाविष्णवमेकादशकपालमित्यादि ।** कथितश्रुत्या कश्चिदारम्भणीयेष्टिनामकः प्रधानीभूतो यागो विहितः। तत्र च दर्शपौर्णमासावारिप्समान इत्यनेन पदेन दर्शपौर्णमासारम्भच्छासमानकालीनत्वमारम्भणीययागे विहितम्। दर्श-पौर्णमासारम्भेच्छायाश्च दर्शपौर्णमासयागपूर्वकालीनत्वेन तादृशेच्छासमकालीना-रम्भणीययागस्यापि प्रधानस्य यथा दर्शपौणमासपूर्वकालकर्तव्यत्वमेवं प्रधान-स्यापि मङ्गलस्य कर्मारम्भेच्छासमानकालीनत्वेन कर्मारम्भपूर्वकालकर्तव्यत्व-मवश्यं स्वीकार्यमिति तात्पर्यम्।. अथ कामनाविशिष्टपुरुषकर्तव्यत्वेन विहितानां कर्मणां यदा कामना तदा कर्तव्यत्वमिति नियमान्मङ्गलस्यापि सकाम-पुरुषकर्तव्यत्वेन श्रुतिविहितस्य कर्मारम्भपूर्वकालादन्यस्मिन्नपि काले करणं स्यादिति चेन्नेत्याह **कामनोपाधीत्यादि ।** तथाहि मङ्गलस्य प्रधान-कर्मत्वेन कामनावत्पुरुषकर्तव्यत्वेऽपि समारब्धकर्मोत्पत्तेरेव काम्यतया तस्याश्चोत्पत्तेः कामनाविषयत्वेन मङ्गलफलत्वात् समारब्धकर्मोत्पत्ति-कारणीभूतं मङ्गलं कर्मारम्भात् प्रागेव कर्तव्यं कार्याव्यवहितपूर्ववर्तिन एव कारणत्वादिति तात्पर्यार्थः। कामनोपाधीति। कामना उपाधिर्विशषणं यस्य तादृश इति व्युत्पत्त्या कामनावानिति तदर्थः। यद्वा, कामनोपाधि कामनासापेक्षं यत् कार्यत्वं तद्वत्त्वेऽपि मङ्गलस्येत्यर्थः। श्रौतकार्यत्वं खलु द्विधा भवति सापेक्षं निरपेक्षञ्च। नित्यानां कर्मणां यत् कार्यत्वं तन्निरुपाधि तत्र कार्यत्वप्रयोजकस्य कस्याप्यनुल्लेखात्। काम्यानां नैमित्तिकानाञ्च कर्मणां यत् कार्यत्वं तत् सोपाधि। कामनाया निमित्तविशेषस्य च तत्र तत्रोपाधेरुल्लेखात्। मङ्गलस्य कार्यत्वं प्रत्युपाधिभूतायाः समारब्ध-कर्मोत्पत्तिकामनायाः समुल्लेखात् तस्य कार्यत्वं सोपाधीति बोध्यम्। काम्यानां कर्मणां कामनां विनाननुष्ठानमिति प्रसिद्धमेवास्ते। एवञ्च सति मङ्गल-स्यापि काम्यत्वे कर्मोत्पत्तिकामनाविरहदशायां समारब्धेऽपि फलवत्कर्मणि तत्पूर्वं शिष्टैर्मङ्गलं नानुष्ठीयेत अधिकारभूतायाः कर्मोत्पत्तिकामनाया विरहादित्यत्राह **समाप्तं कर्मेत्यादि ।** समुत्पन्नमेव कर्म फलाय समर्थं भवतीति शास्त्रसिद्धान्तात् कर्मोत्पत्तिकामनां विना पुरुषस्य सकलकर्मारम्भा-सम्भवात् तादृशं स्थलमेव नास्ति यत्र कर्मोत्पत्तिकामनामुल्लङ्घ्य पुरुषैः फलवत्कर्म समारब्धमिति तात्पर्यार्थः।

तन्न। कारीरीजन्यातिशयवद्विहितप्रधानजन्यातिशयत्वान्मङ्गल-जन्यापूर्वस्यापि फलसम्पादकाशेषकारणसम्पादकतयारब्धकर्मसमाप्त्य-

वश्यम्भावापत्तेः फलावश्यम्भावनिश्चयं विना वैदिककर्माननुष्ठानात् ।

पूर्वोक्तं मङ्गलस्य प्रधानकर्मत्वपक्षं निरसितुमाह तन्न कारीरीजन्यातिशयवद्विहितेत्यादि । मङ्गलस्य प्रधानकर्मत्वे तस्य स्वसाध्यापूर्वद्वारा समारब्धकर्मोत्पत्तिजनकत्वमवश्यं स्वीकार्यम् । तत्तद्वैदिकप्रधानकर्मोपादानकप्रवृत्तिं प्रति तत्तत्कर्मणि तत्तत्फलव्याप्यत्वनिश्चयस्य जनकत्वेन तत्तद्वैदिकप्रधानकर्मणां तत्तत्फलव्याप्यत्वमवश्यं स्वीकार्यम् । अन्यथा प्रवर्तकनिश्चयस्य क्वचिद्भ्रान्तत्वमापद्येत । तत्तद्वैदिकप्रधानकर्मणां यत् तत्तत्फलव्याप्यत्वरूपः फलावश्यम्भावस्तत्र दृष्टान्तमुपस्थापयति कारीरीजन्येत्यादि । वृष्टिविरहस्थले स्वजन्यातिशयवत्त्वसम्बन्धेन वर्तमानत्वात् कारीरीयागस्य स्वजन्यवृष्टयात्मकफलव्याप्यत्वं बोध्यम् । कारीरीवन्मङ्गलस्यापि प्रारब्धकर्मोत्पत्तिरूपफलं प्रति प्रधानकर्मत्वे वृष्टौ कारीरीवत् तस्यापि प्रारब्धकर्मोत्पत्तौ स्वजन्यादृष्टद्वारा व्याप्यत्वं स्यादिति भावार्थः । ननु करणव्यापारभिन्नानां सर्वेषामेव कारणानां सहकारिसापेक्षत्वेन तदसमवधानदशायां फलासम्बन्धस्य सर्वतन्त्रसिद्धान्तत्वात् करणव्यापारातिरिक्तस्य प्रधानकर्मणोऽपि मङ्गलस्य सहकार्यसमवहितस्यारब्धकर्मोत्पत्तिरूपफलासम्बद्धस्य कथं तादृशफलव्याप्यत्वमारोपयितुं योग्यमिति चेदत्राह फलसम्पादकाशेषकारणसम्पादकतयेति । तथाहि कारीर्यादिवैदिकप्रधानकर्मदृष्टान्तेन यदा यदा वैदिकप्रधानकर्मवत्त्वं तदा स्वेतरसकलकारणसमवधानमिति नियमस्य प्रामाणिकत्वेन मङ्गलात्मके प्रधानवैदिककर्मणि स्वेतरसकलसहकारिसमवधानस्य कालिकव्याप्यत्वं सिद्धं भवति । तथा च मङ्गलस्य वैदिकप्रधानकर्मत्वपक्षे तत्र समारब्धकर्मोत्पत्तिरूपफलावश्यम्भावः समारोपयितुं योग्य इति भावः । आपत्तिप्रयोगस्तु मङ्गलं यदि वेदविहितत्वे सति प्रधानं स्यात् तदा सर्वदा फलसम्पादकयावत्सहकारिभिः समवहितं स्यादित्याकारको बोध्यः । ननु दृष्टान्त एव फलावश्यम्भावोऽसिद्ध इति कथं तेन दृष्टान्तेन प्रधानकर्मत्वरूपापादकेन मङ्गले समारब्धकर्मोत्पत्तिरूपफलस्यावश्यम्भाव आपादयितुं शक्य इत्यत्राह फलावश्यम्भावनिश्चयं विनेत्यादि । तथाहि कारीर्यादावपि वृष्टिरूपफलस्यावश्यम्भावो नूनं स्वीकार्यः । अन्यथा तदुपादानकप्रवृत्तिहेतो वृंष्टयवश्यम्भावनिश्चयस्य भ्रान्तत्वं स्यात् । वैदिकप्रवृत्तौ प्रवर्तकज्ञानस्य वेदमूलकत्वेन सिद्धान्तिभिरभ्रान्तत्वाङ्गीकारादित्यर्थः ।

न चैवं भूयसि साङ्गेऽपि मङ्गले क्वचिदारब्धसमाप्त्यभावात् । न च तत्रामुष्मिकं फलमैहिकमात्रफलत्वात् । वैदिककर्मणः फलावश्यम्भावेनागन्तुकदुरितेनाप्यप्रतिबन्धात् ।

ननु मङ्गलस्य प्रधानकर्मत्वविपक्षे पूर्वं मङ्गलं यदि वेदविहितत्वे सति प्रधानं स्यात् स्वेतरसकलसहकारिभिः समवहितं स्यादित्याकारकस्तर्कः समुपस्थापितस्तत्रापाद्यमिष्टमेवेति चेत्तत्राह न चैवमित्यादि । तथाहि मङ्गलत्वावच्छेदेन स्वेतरसकलसहकारिकारणानां समवधानं भवतीति यदुक्तं तन्न सत्यमित्यर्थः । कथमिति चेदत्राह भूयसि साङ्गेऽपीत्यादि । तथाहि सर्वत्रैव मङ्गले सकलसहकारिकारणसमवधानस्वीकारपक्षे मङ्गलाचरणस्थले सर्वत्रैव समारब्धकर्मोत्पादकसामग्री स्वीकार्या स्यात् । सत्याञ्च सामग्र्यां फलमवश्यमेव स्यात्, सामग्री कार्यं नार्जयेदित्यस्यानङ्गीकारात् । मङ्गलविशेषे च समारब्धकर्मानुत्पत्तेः सर्ववादिसम्मतत्वात् । तथाच सकलमेव मङ्गलं स्वेतरसकलसहकारिभिः समवहितं भवतीति न वक्तुं योग्यमिति भावार्थः । अथ यत्र मङ्गलाचरणस्थले ऐहिकं प्रारब्धग्रन्थोत्पत्तिरूपं फलं न दृश्यते जन्मान्तरीणतादृशफलकल्पनया तन्मङ्गलव्यक्तेरपि फलवत्त्वं कल्पनीयमित्येवंरीत्या मङ्गले फलावश्यम्भावनियमः सिध्येदिति चेदत्राह न च तत्रामुष्मिकमित्यादि । तथाहि शिष्टाचारानुमितायाः अप्रत्यक्षश्रुतेरेव मङ्गलविधानप्रतिपादकत्वेन शिष्टैश्च जन्मान्तरीयकर्मोत्पत्त्युद्देशेन कुत्रापि कदापि मङ्गलानाचरणान्मङ्गले आमुष्मिकफलकल्पनाया अनवकाशादिति भावार्थः । अथैतन्मते मङ्गलस्य समारब्धकर्मोत्पत्तिमात्रं प्रत्येव हेतुत्वेन प्रतिबन्धकीभूतदुरितनाशं प्रत्यहेतुत्वात् स्थलविशेषे सत्यपि मङ्गले यत् समारब्धकर्मानुत्पत्तिर्दृश्यते सा कालान्तरीणदुरितादेव भवतीति चेदत्राह वैदिककर्मणः फलेत्यादि । तथाहि मङ्गलस्य प्रधानकर्मत्वपक्षे वैदिकप्रधानकर्मणाञ्च फलावश्यम्भावनियमे केनापि प्रतिबन्धकेनारब्धकर्मोत्पत्तिप्रतिरोधकल्पनाया असम्भवादिति भावः ।

किञ्च यथा कारीर्यादिकमग्रिमपुरुषव्यापारं विनैव फलहेतुस्तथा मङ्गलमपि तेन विनैव हेतुः स्यात् । न चैवम् । लोकावगतकारणत्वात्तदपेक्षेति चेत्, तर्हि स एव हेतुरस्तु, किमनेन ?

पूर्वं यदुक्तं प्रधानकर्मोपादानकप्रवृत्तिं प्रति फलावश्यम्भावनिश्चयः कारणं प्रधानकर्मणाञ्च स्वजन्यादृष्टविशेषद्वारा स्वेतरसकलसहकारिकारणसमवधानं प्रति हेतुत्वमिति द्वयमयुक्तमतः प्रकारान्तरेण मङ्गलस्य प्रधानकर्मत्वमधिक्षेप्नुमाह किञ्चेत्यादि। प्रधानकर्मणां फलावश्यम्भावनियमो न सम्भवति। सिद्धान्ते वहूनां वैदिककर्मणां सहकारिसमवधानवैधुर्येण स्वजन्यफलासम्बन्धस्य स्वीकृतत्वात्। प्रधानकर्मणां स्वजन्यादृष्टविशेषद्वारा स्वेतरसकलसहकारिकारणसमवधानप्रयोजकत्वमपि नैव स्वीकर्तुं योग्यम्। तथा सति कस्यापि वैदिककर्मण आमुष्मिकफलजनकत्वं न स्यात्। तेन तेन कर्मणा तत्तददृष्टविशेषस्य समुत्पादेन सकलसहकारिकारणसमवधानेन सद्यःफलजनकत्वस्य कथमपि प्रत्याख्यातुमशक्यत्वादिति भावः। लोकस्तु वैदिककर्मणि श्रद्धातिशय्यात् फलावश्यम्भावनियमं कल्पयित्वैव स्थलविशेषे प्रवर्तत इत्येव तत्त्वम्। कारीर्यादौ प्रधानकर्मणि तु तत्सम्पत्त्यनन्तरं कर्तृपुरुषीयव्यापारान्तरनैरपेक्ष्येणैव वृष्टिरूपफलसम्बन्धो दृश्यते। तेन च दृष्टान्तेन प्रधानकर्मत्वे पुरुषव्यापारान्तरनिरपेक्षताया नियमः सिध्यति। एवञ्च सति मङ्गलं यदि वेदविहितत्वे सति प्रधानं स्यात्तदोच्चारणाद्यात्मकपौरुषेयव्यापारं विनैव समारब्धकर्मणामुत्पादकः स्यादित्येवमनिष्टापत्तिर्भवेदिति निरसितुरभिप्रायः। आपत्तिरिष्टैवेति चेन्नेत्याह। न चैवमिति। मङ्गलमनन्तरकालीनपुरुषव्यापारनैरपेक्ष्येणैव समारब्धकर्माणि सम्पादयतीति न वस्तुस्थितिरिति तदर्थः। यत्र यत्र वैदिकप्रधानकर्मत्वं तत्र पुरुषव्यापारान्तरनैरपेक्ष्येण फलसम्बन्धित्वमिति न नियमः। परं तत्र लोकावगतकारणभिन्नाग्रिमपुरुषव्यापारादिनैरपेक्ष्येण फलसम्बन्ध इत्येव नियमः। न च नियमशरीरे तादृशसङ्कोच अनतिप्रयोजक इति वाच्यं पुत्रेष्ट्यादौ व्यभिचारात्। तथाहि पुत्रेष्टिस्थले न तस्य सर्वथाग्रिमपुरुषव्यापारनैरपेक्ष्येण फलसम्बन्धः। तथा सति गर्भपोषकभोजनादीनां प्रसवादीनाञ्च फलोत्पत्तावनपेक्षा स्यात्। तत्र च भोजनप्रसवादीनां पुत्रोत्पत्तौ लौकिककारणत्वाद् यथा तत्सापेक्षत्वं पुत्रेष्टेस्तथा मङ्गलाचरणस्थलेऽप्युच्चारणाद्यात्मकपुरुषव्यापाराणां समारब्धग्रन्थाद्यात्मकफलोत्पत्तावन्वयव्यतिरेकसिद्धकारणताकत्वेन लौकिकत्वात् तत्सापेक्ष्येणैव फलोत्पादकत्वे क्षतिविरहादिति पूर्वपक्षाशयः। एतन्निरस्यति। स एवेत्यादि। तथाच मङ्गलाचरणस्यापि वैदिककारणस्य समारब्धकर्मोत्पत्तावुच्चारणादिलौकिककारणसापेक्षत्वे तस्यैव लौकिककारणत्वं समारब्धकर्मोत्पत्तिसम्पादकत्वे मङ्गलस्य तत्सम्पादकत्वकल्पनं निष्प्रयोजनमिति भावार्थः।

आरब्धकर्मजनकादृष्टकारणसम्पत्तौ पुत्रेष्टिवत् तत्समाप्ति-साधनत्वं श्रुत्या बोध्यत इति चेन्न । तत्र दृष्टकारणसम्पत्तौ पुत्रानुत्पादाददृष्टद्वारा पुत्रेष्टेस्तज्जनकत्वमस्तु । न च कर्मनिर्वाहे दृष्ट-सकलहेतुसम्पत्तौ विलम्बो येन मङ्गलजन्यादृष्टापेक्षा स्यात् । अपि च मङ्गलं विनापि प्रमत्तनास्तिकानुष्ठितसमाप्तेर्न तत्तत्र कारणम् । जन्मान्तरीयपुण्यसम्मत्तिस्तत्र हेतुरिति चेन्न । तथापि व्यभिचारात् ।

मङ्गलस्य समारब्धकर्मोत्पत्तिं प्रति लौकिककारणेन यदन्यथासिद्धत्वमुक्तं तद्दूषयति । **आरब्धकर्मजनके**त्यादि । युक्तितोऽधिकबलवता वेदेन समारब्ध-कर्मोत्पत्तौ मङ्गलस्य कारणत्वकथनात्तस्य सहस्रेणापि प्रमाणान्तरेण निरसना-सम्भवादिति तात्पर्यम् । एतदप्ययुक्तमित्याह । **न तत्र दृष्टकारणसम्पत्तावि**-त्यादि । तथाहि मङ्गलस्य समारब्धकर्मोत्पत्तिसाधकत्वप्रतिपादकप्रत्यक्ष-श्रुत्यभावेन शिष्टाचारानुमितश्रुतेर्विघ्नध्वंसकामो मङ्गलमाचरेदित्येवमाकार-स्यापि सम्भवेन तया श्रुत्या कर्मोत्पत्तिसाधकत्वमेव मङ्गलस्य कथितमिति निश्चेतुमशक्यम् । अपि च पुत्रेष्टयादिस्थले लौकिककारणानां तावतां समावेशेऽपि कदाचित् पुत्रानुत्पत्तिर्दृश्यते । पुत्रेष्टिसमवधाने च पुत्रोत्पत्ति-र्भवति । एवञ्च सति पुत्रविशेषे तद्यागजन्यादृष्टस्यापि कारणत्वमवश्य-मायाति । मङ्गलस्थले च ग्रन्थोत्पत्तिनिर्वाहकतावल्लौकिककारणसमावेशेऽपि स्थलविशेषे समारब्धकर्मोत्पत्तिर्न भवतीति न दृश्यते । तथाच वैषम्यात् पुत्रेष्टिवन्मङ्गलस्याप्यदृष्टद्वारा समारब्धकर्मोत्पत्तौ कारणत्वकल्पनं न सम्भवतीति भावार्थः । मङ्गलस्य समारब्धकर्मोत्पत्त्यसाधनत्वं द्रढयितुमाह । **अपि च मङ्गलं विनापी**त्यादि । तथाहि समाप्तिकामो मङ्गलमाचरेदित्येव-माकारस्य शिष्टाचारानुमितश्रुतेरभ्युपगमेऽपि न तया मङ्गलस्य समारब्ध-कर्मोत्पत्तिसाधकत्वं प्रमाणितं भवति । प्रात्यक्षिकव्यतिरेकव्यभिचारेण बाधितत्वाच्छ्रुतिकथितस्यापि तादृशकारणत्वस्य बुद्ध्यनारोहात् । नास्तिकादि-ग्रन्थे मङ्गलासत्त्वेऽपि ग्रन्थोत्पत्तिसद्भावाद्व्यतिरेकव्यभिचारो बोध्यः । प्रदर्शित-व्यतिरेकव्यभिचारं निरसितु चेष्टते । **जन्मान्तरीये**त्यादि । एतन्निरस्यति । **न तथापी**त्यादि । तथापि नास्तिकादिनिर्मितग्रन्थस्थले मङ्गलाभावेन समारब्ध-कर्मोत्पत्तित्वावच्छिन्नं प्रति मङ्गलस्य कारणत्वं न सम्भवतीति भावार्थः ।

क्वचित् पुण्यसम्पत्तिः क्वचिन्मङ्गलं हेतुरिति व्रीहियववद्विकल्प एवेति चेत्। तर्हि तत्सम्भावनया नियतं मङ्गलानुष्ठानं न स्याद् यवप्रयोगे व्रीहेरिव। विकल्पे चोभयस्याशास्त्रार्थत्वात्।

मङ्गलस्य कर्मोत्पत्तिसामान्यं प्रति कारणत्वपक्षे प्रदर्शितस्य व्यतिरेकव्यभिचारस्य निरासाय शङ्कते। क्वचित् पुण्यसम्पत्तिरित्यादि। तथाहि स्वतःसिद्धविघ्नविरहविशिष्टप्रारब्धकर्मोत्पत्तिं प्रति शिवपूजनादिरूपकर्मान्तरजन्यपुण्यविशेषः कारणं विघ्नविशिष्टप्रारब्धकर्मोत्पत्तिं प्रति मङ्गलं कारणमिति कार्यकारणभावद्वयं कल्पनीयं, न तु प्रारब्धकर्मोत्पत्तिसामान्यं प्रति मङ्गलं कारणमिति सामान्यतः कार्यकारणभावोऽस्तीत्यभिप्रायः। एवञ्च स्वतःसिद्धविघ्नविरहस्थलीयप्रारब्धकर्मोत्पत्तेर्मङ्गलाजन्यत्वान्मङ्गलासत्त्वे तादृशकर्मोत्पत्तिस्वीकारेऽपि न मङ्गलस्य व्यतिरेकव्यभिचारित्वमापादयितुं योग्यम्। अथैवमपि यत्र पुण्यजनकशिवपूजनादिकं मङ्गलञ्चेत्युभयं केनचिदनुष्ठितं तत्रोभयविधप्रारब्धकर्मोत्पत्तिकारणसत्त्वात् परस्परविरुद्धफलद्वयमुत्पद्यताम्। अन्यस्य स्वतःसिद्धविघ्नविरहविशिष्टत्वादन्यस्य च विघ्नविशिष्टत्वात् प्रारब्धकर्मोत्पत्तिरूपफलयोः परस्परविरुद्धत्वं बोध्यमित्यत आह व्रीहियववद्विकल्प एवेतीति। तथाहि व्रीहियवविकल्पस्थले यथा व्रीहिकरणकयागजन्यापूर्वस्य यवकरणकयागजन्यापूर्वाद्विलक्षणत्वमेवं यवकरणकयागजन्यापूर्वस्य व्रीहिकरणकयागजन्यापूर्वाद्वैषम्यमेवं प्रकृतेऽपि मङ्गलजन्यापूर्वस्य पुण्यजन्यापूर्वादेवं पुण्यजन्यापूर्वस्य मङ्गलजन्यापूर्वाद्वैषम्यं बोध्यम्। व्रीहियवस्थले यथा तत्तदपूर्वं प्रति प्रत्येकं यवव्रीहिजन्ययागयोः पृथक्कारणताद्वयमेवं प्रकृतेऽपि पुण्यमङ्गलयोस्तत्तदपूर्वं प्रति पृथगेव कारणत्वम्। अपि च यवव्रीहिस्थले उभयजन्यद्विविधपुरोडाशकरणकयागादपूर्वोत्पत्तिनिवृत्त्यर्थं व्रीहिकरणकयागाभावविशिष्टयवकरणकयागत्वेन एवं यवकरणकयागाभावविशिष्टव्रीहिकरणकयागत्वेन तत्तद्विलक्षणापूर्वद्वयं प्रति कारणत्वं स्वीकृतम्। तथा प्रकृतेऽपि कर्मान्तरजन्यपुण्यविशेषाभावविशिष्टमङ्गलस्य एवं मङ्गलजन्यपुण्यविशेषाभावविशिष्टकर्मान्तरस्य तत्तद्विलक्षणकर्मोत्पत्तिं प्रति कारणत्वं कल्पनीयमिति न परस्परजन्यकर्मोत्पत्तौ परस्परस्य व्यतिरेकव्यभिचार इत्यभिप्रायः। एतन्निषधति तर्हि तत्सम्भावनयेत्यादि। विकल्पस्थले यथा यवव्रीह्योरुभयोः सर्वत्र दर्शादियागे प्रयोगो न भवति शास्त्रेणोभयजन्यापूर्वस्यानभिहितत्वात् तथा प्रकृतेऽपि

कदाचित् पुण्यसम्भावनया मङ्गलाचरणं विनैव शिष्टाः कर्मणि प्रवर्त्तेयुः। तथाच कर्मारम्भपूर्वसमये शिष्टानां मङ्गलाचरणमनियतं स्यादिति तात्पर्यम्। वस्तुतस्तु दर्शादियागे व्रीहियवयोरुभयोर्वेदविहितत्वात्तत्र विकल्पकल्पनासम्भवेऽपि प्रकृतस्थले मङ्गलकर्मान्तरयोर्विधानासत्त्वाद्विकल्पस्य प्रसङ्गोऽपि नोदेति।

**ननु विधिवाक्यं न फलनियतपूर्वसत्त्वं बोधयति किन्तु मङ्गलात् फलावश्यम्भावमिति चेन्न। इष्टसाधनत्वस्य विध्यर्थत्वात्। अथान्वयव्यतिरेकाभ्यां तद्ग्रहे व्यभिचारो दोषाय, न त्वागमेन तद्ग्रहे। तदुक्तम्—आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषायेति। अतएव यागादेः स्वर्गसाधनतेति चेन्न। नियतपूर्वसत्त्वस्य ग्राह्यस्याभावादागमेनापि बोधयितुमशक्यत्वात्। यागजनितस्वर्गे कारीरीजनितवृष्टौ च जातिविशेष एवास्ति।**

पुनरपि मङ्गलस्य प्रधानकर्मतावादी स्वपक्षं समर्थयते। **ननु विधिवाक्यमित्यादि।** तथाहि शिष्टाचारानुमितमङ्गलकर्तव्यताबोधकविधिवाक्येन यदि मङ्गलस्य समारब्धकर्मोत्पत्तिरूपफलं प्रति नियतपूर्ववर्तित्वमभिहितं भवति तदैव नास्तिकादिस्थलीयकर्मोत्पत्त्यन्तर्भावेण व्यतिरेकव्यभिचारो दोषाय भवति। तदेव तु न। किन्तु विधिना मङ्गलाचरणस्थले प्रारब्धकर्मोत्पत्तिरूपं फलमवश्यं भवतीत्येतावन्मात्रमेवाभिहितमस्ति। अतो व्यतिरेकव्यभिचारो न मङ्गलस्य प्रधानकर्मत्वं विहन्तुं योग्य इति समर्थनग्रन्थाभिप्रायः। तथाहि मङ्गलकर्तव्यताबोधकश्रुत्या प्रारब्धकर्मोत्पत्तौ मङ्गलसत्तावश्यम्भावित्वप्रतिपादने तस्यां मङ्गलव्यापकत्वमायाति धूमसत्तावश्यम्भाविनि वह्नौ धूमव्यापकत्वस्यैव स्वीकाराद् व्याप्यासत्त्वेऽपि व्यापकसत्त्वस्याविरुद्धत्वान्मङ्गलस्य व्यतिरेकव्यभिचारित्वेऽपि प्रारब्धकर्मोत्पत्तौ मङ्गलसत्तावश्यम्भावित्वे बाधकाभाव इति तात्पर्यम्। एतन्निरस्यति। **न, इष्टसाधनत्वस्येत्यादि।** तथाहि विधिवाक्यस्य कर्मोत्पत्त्यवश्यम्भावित्वबोधकत्वपक्षे व्यतिरेकव्यभिचारो न दोषायेति यदुक्तं तत् सत्यमेव परं तदेव न। विधिश्रवणाल्लोको विहितार्थे कीर्तितफलसाधनत्वमेव बुध्यते। एवञ्च मङ्गलविधायकश्रुत्या मङ्गले कर्मोत्पत्तिसाधनत्वस्यैव प्रतिपादनाद् व्यतिरेकव्यभिचारस्य च साधनत्वव्याघातकत्वान्न तस्य प्रारब्धकर्मोत्पत्तिफलकप्रधानकर्मत्ववादो

युक्तिं सहत इति निरसितुरभिप्रायः। पुनरपि प्रधानकर्मतापक्षं समर्थयते। अन्वयव्यतिरेकाभ्यामित्यादि। तथाहि प्रत्यक्षादिना यत्र कार्यकारणभावो गृहीतो भवति तत्रैव व्यतिरेकादिव्यभिचारो दोषाय न तु शब्दात् तद्ग्रह इत्यभिप्रायः। अत्र पूर्वसूरीणां सम्मतिं दर्शयति। तदुक्तमित्यादि। द्रव्यकिरणावल्यामाचार्यचरणैरिति बोध्यम्। अतएव यागादेरित्यादि। तथाहि व्यतिरेकव्यभिचारादेर्वैदिककारणत्वविघातकत्वेऽश्वमेधयागादीनामपि स्वर्गादि-साधनत्वं विहतं स्यात्, सामान्यतः स्वर्गं प्रति तेषां व्यतिरेकव्यभिचारित्वात्। अग्निहोत्रादिस्थलीयस्वर्गे स्वजन्यादृष्टद्वाराश्वमेधस्य तत्र विरहात्। वाजपेयादिस्थलेऽप्येतत् स्वयमूह्यम्। अतः श्रुत्यर्थानुपपत्त्या व्यभिचारस्य श्रौतकारणत्वाविघटकत्वमवश्यमङ्गीकार्यम्। एवञ्च व्यतिरेकव्यभिचार-सत्त्वेऽपि मङ्गलस्य प्रारब्धकर्मोत्पत्तिफलकप्रधानकर्मतापक्षो युक्त एवेति स्थापनापक्षाभिप्रायः। एतन्निषेधति। नेत्यादि। तथाहि विधिवाक्येन मङ्गले प्रारब्धकर्मोत्पत्तिरूपफलसाधनत्वस्य प्रतिपादने तस्य तादृशफलनियत-पूर्ववर्तित्वमपि तेनैव प्रतिपादितं भवति। एवञ्च विधिवाक्यग्राह्यस्य पूर्व-वर्तित्वनियमस्य व्यतिरेकव्यभिचाररूपो योऽभावस्तन्निश्चयस्य नियतपूर्ववर्तित्वं प्रति बाधनिश्चयत्वेन बाधनिश्चयस्य च शाब्दज्ञानप्रतिबन्धकत्वेन न व्यतिरेक-व्यभिचारसत्त्वे श्रुत्या मङ्गलस्य समारब्धकर्मोत्पत्तिरूपफलसाधनत्वप्रति-पादनं कथमपि सम्भवतीति निरासाभिप्रायः। नन्वेवं यदि व्यतिरेक-व्यभिचारस्य वैदिककारणत्वेऽपि विघटकत्वं स्यात् तदाग्निष्टोमजन्य-स्वर्गेऽश्वमेधयागस्येवाश्वमेधजन्यस्वर्गेऽग्निष्टोमादेरव्यवहितपूर्वमसत्त्वात्तेषां स्वर्गं प्रति व्यतिरेकव्यभिचारित्वेनाश्वमेधादीनामपि श्रुतिबोधितं स्वर्गसाधनत्वं बाधितं स्यादेवं कारीरीविरहेऽपि वृष्टिदर्शनाद्वृष्टौ च तस्या व्यतिरेक-व्यभिचारित्वेन श्रुत्या बोधितं कारीर्या वृष्टिसाधनत्वं तथैव व्याहतं स्यादित्यत्राह यागजनितस्वर्ग इत्यादि। तथा च न सामान्यतः स्वर्गत्वावच्छिन्नं वृष्टित्वावच्छिन्नं प्रति वाश्वमेधादेः कारीर्या वा साधनत्वं स्वर्गकामोऽश्वमेधेन यजेतेत्यादिश्रुत्या प्रतिपाद्यते। अपि तु स्वर्गगतं वृष्ट्यादिगतञ्च वैजात्य-विशेषावच्छिन्नं प्रत्येव साधनत्वमभिधीयते। एवञ्च तत्तद्विजातीयस्वर्गे-ऽश्वमेधादीनां तत्तद्विजातीयवृष्टौ च कारीर्यादेर्व्यतितेकव्यभिचाराभावान्न श्रुतिबोधितं तत्तत्साधनत्वं व्याहतं भवतीति भावार्थः।

अपरे तु मङ्गलस्यारब्धनिर्वाहकत्वं विघ्नसंसर्गाभावद्वारा तथैव प्रतिबन्धकाभावस्य हेतुत्वात्। स चाभावः सतो विघ्नस्य ध्वंसो-

नागतस्यानुत्पादश्च कर्मनिर्वाहसमयस्थायी। विघ्नकारणविनाश-द्वारा प्रागभावस्य साध्यत्वं, यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वं यद्व्यतिरेके चासत्त्वं तदेव तस्य तज्जन्यत्वं न त्वसतः सत्त्वं गौरवात्। अस्ति च विघ्नकारणनाशे सति विघ्नप्रागभावस्य तथात्वम्। तावति समये दुरितानुत्पादश्च न साक्षान्मङ्गलजन्य इत्यदृष्टद्वारा तथा।

स्वाधीनादृष्टाधीनो यो विघ्नसंसर्गाभावस्तं द्वारीकृत्य मङ्गलं समारब्धकर्मसमाप्तिं जनयतीतिवादिनां केषाञ्चिन्मतमुत्थापयति अपरे तु मङ्गलस्यारब्धनिर्वाहकत्वमित्यादि। तथाहि स्वं मङ्गलं तदधीनं तत्साध्यं यददृष्टं तदधीनस्तत्प्रयोज्यो यो विघ्नसंसर्गाभावस्तद्द्वारा मङ्गलं समारब्धकर्मसमाप्तिमुत्पत्तिं वा प्रति कारणमिति तेषामभिप्रायः। पूर्वस्मिन् मते तु मङ्गलजन्यमदृष्टमेव फलीभूतायां समारब्धकर्मोत्पत्तौ मङ्गलस्य द्वारत्वेन स्वीकृतमासीदत्र तु तादृशादृष्टाधीनो विघ्नसंसर्गाभाव इति मतयोर्विशेषः। ननु विघ्नानां दुरितादीनां कर्मसमाप्तौ प्रतिबन्धकत्वेन प्रतिबन्धकाभावस्य चात्यन्ताभावत्वेनैव फलसाधनत्वात् कथमत्र संसर्गाभावत्वेन ध्वंस-प्रागभावात्यन्ताभावसाधारणेन विघ्नाभावानां समारब्धकर्मसमाप्तिरूपफले मङ्गलस्य द्वारत्वोक्तिः संगच्छतामिति चेदत्राह तथैवेत्यादि। त्रिविधाभाव-साधारणेन संसर्गाभावत्वेनैवेत्यर्थः। अन्यथावग्रहादिस्थलीयवृष्ट्यादौ फले प्रतिबन्धकीभूतावग्रहादेरत्यन्ताभावस्यासत्त्वेन सम्यगनुष्ठितादपि कारीर्यादि-र्वृष्टिर्न स्यात्। संसर्गाभावत्वेन प्रतिबन्धकाभावस्य कारणत्वे तु तत्रत्य-कारीर्यादेरपि सफलत्वमव्याहतं भवति। कारीरीसाध्यस्यावग्रहध्वंसरूप-प्रतिबन्धकसंसर्गाभावस्य तत्र सत्त्वादिति तात्पर्यम्। अथैवमपि विघ्नप्राग-भावस्थलीयं साङ्गमपि मङ्गलं निर्व्यापारं स्यात्। तत्र विघ्नस्याविद्यमानत्वेन तद्ध्वंसकल्पनाया अनवकाशात् सतोऽपि विघ्नप्रागभावस्यानादित्वेन मङ्गला-जन्यत्वादिति चेदत्राह विघ्नकारणेत्यादि। तथा ह्यनादेः प्रागभावस्याजन्य-त्वेऽपि विघ्नकारणीभूतो यो मङ्गलप्रागभावः सम्यगनुष्ठितेन मङ्गलेन तस्य विनाशो भवति। एवञ्च मङ्गलदशायां विघ्नप्रागभावस्य तेन प्रतिपालनात् तस्य मङ्गलसाध्यत्वं बोध्यम्। अत्र विघ्नकारणपदं मङ्गलप्रागभावरूपार्थं प्रयुक्तम्। एतदेव विशदयति। यस्मिन् सतीत्यादि। तथाहि मङ्गलसत्त्वे

विघ्नानामनुत्पत्त्या तत्प्रागभावस्तिष्ठति मङ्गलासत्त्वे चोत्पन्नेन विघ्नेन तत्प्रागभावस्य विनाशात् प्रागभावो न तिष्ठतीत्यतो विघ्नप्रागभावस्य मङ्गलप्रयोज्यत्वरूपजन्यत्वं यदुक्तं तत् समीचीनमेवेति बोध्यम्। न त्वसतः सत्त्वमित्ति। असत इति प्रागभावस्येत्यर्थः। सत्त्वमिति। उत्पत्तिरित्यर्थः। यद्यपि साधारणतो जन्यत्वपदादुत्पत्तिरूपोऽर्थ एव लोकैः प्रतीयते प्रकृते तु न तादृशार्थघटितद्वारत्वार्थे द्वारपदं प्रयुक्तमपि तु कथितार्थे एवेति हृदयम्। एतन्मते मङ्गलस्य स्वजन्यादृष्टेन प्रतिबन्धकसंसर्गाभावरूपद्वारनिर्वाहकत्वमुक्तम्। अतो मङ्गलेन साक्षादेव तादृशद्वारनिर्वाहसम्भवेऽलमदृष्टेनेति चेदत्राह। तावति समय इत्यादि। तथाहि क्रियारूपत्वेन मङ्गलस्यात्यल्पकालस्थायित्वात् समारब्धकर्मसमाप्तिपर्यन्तमविद्यमानत्वेन मध्ये विघ्नोत्पत्तिसम्भवेन तावत्-कालपर्यन्तं विघ्न प्रागभावपरिपालनार्थं मङ्गलजन्यमदृष्टमवश्यं विवक्षणीयमिति भावार्थः।

एवं निर्विघ्नं समाप्यतामिति कामनया तदाचारोऽपि सङ्गच्छते। अतएव यत्र विघ्नाभावः स्वतःसिद्धस्तत्र मङ्गलस्याकिञ्चित्करत्वेन वेदाप्रामाण्यमिति निरस्तमनागत-विघ्नाभावस्य तत्रापि साध्यत्वात्। सर्वे विघ्नाः शमं यान्तीति यत्र विनायकस्तवपाठादौ श्रुतमस्ति तत्र तत एव प्रमत्तानुष्ठितसमाप्तेरनादौ संसारेऽवश्यं तदाचारात्। तथा च तेन समं मङ्गलस्य विकल्प एव। यत्र च साङ्गे मङ्गले सत्यपि न फलं तत्र विघ्नभूयस्त्वादिति।

पूर्वं तावन्मङ्गलाचरणस्य क्रियारूपत्वादत्यल्पस्थायित्वेन समाप्तिकाल-पर्यन्तमविद्यमानत्वात् तावत्पर्यन्तं विघ्नप्रागभावप्रतिपालनार्थमवश्यं मङ्गल-जन्यमपूर्वं कल्पनीयमित्युक्तम्। अथैवं मङ्गलाददृष्टकल्पने तदेव परिसमाप्ति-साधनं स्यादलं मङ्गलस्य समाप्तिसाधनत्वकल्पनयेति पूर्वपक्षे उत्तरमाह। एवं निर्विघ्नमित्यादि। तथाहि मङ्गलस्य समारब्धकर्मसमाप्तिजनकादृष्टजनकत्वं तद्द्वारासमाप्तिजनकत्वं वा न लोकतः सिद्धमपि तु शिष्टाचारानुमितश्रुतेः। एवञ्च श्रुत्यनुसारेणैव मङ्गलस्य समाप्तिसाधनत्वमस्ति न वेति विचार्यम्। निर्विघ्नसमाप्तिकामो मङ्गलमाचरेदिति मङ्गलविधायकश्रुत्या विघ्नविरहविशिष्ट-

समाप्तिकामनाधिकारत्वेन प्रतिपादिता। कामनाविषयस्यैव विहितक्रियायां फलत्वान्मङ्गलस्य समाप्तिफलकत्वं श्रुतित एव प्राप्तं भवति। फलीभूतसमाप्तौ विघ्नविरहस्य विशेषणत्वाद् विशेषणीभूतविघ्नाभावस्यापि द्वारत्वेन मङ्गलजन्यत्वं तत एवायाति। विशिष्टस्य फलत्वे विशेषणस्य तत्त्वं सिद्धान्तसम्मतम्। तथा च श्रुत्यनुसारेणैव निर्विघ्नपरिसमाप्तेर्मङ्गलफलत्वकल्पनादेतन्मते श्रुत्यर्थोऽपि साधु सङ्गच्छत इत्यभिप्रायः। अनागतेत्यादि। तथाहि यदि विघ्नध्वंस एव केवलं मङ्गलस्य समाप्तिफलकत्वे द्वारं स्वीकृतं स्यात् तदैव स्वतःसिद्धविघ्नविरहस्थलीयमङ्गलस्य द्वारवैधुर्येण निष्फलत्वमापद्येत। एतन्मते तु विघ्नसंसर्गाभावस्य द्वारत्वात् तत्र च विघ्नप्रागभावस्यापि प्रविष्टत्वात् स्वतःसिद्धविघ्नविरहस्थलेऽनागतविघ्नप्रागभावप्रतिपालनद्वारा मङ्गलस्य न निष्फलत्वशङ्कावकाशोऽस्तीति भावः।

ननु प्रमत्तादिपुरुषकर्तृकप्रारब्धकर्मसमाप्तौ मङ्गलाभावाद् व्यतिरेकव्यभिचारित्वेन मङ्गलस्य विघ्नसंसर्गाभावद्वारापि न समाप्तिकारणत्वं सम्भवति। न च तत्रापि जन्मान्तरीयं मङ्गलं कल्पनीयमिति वाच्यम्। जन्मान्तरीयसमाप्त्युद्देश्येन शिष्टैर्मङ्गलानाचरणादिति चेदत्राह। सर्वे विघ्नाः शममित्यादि। तथाहि प्रदर्शितस्मृत्यादिवाक्येन मङ्गलानात्मकस्य विनायकस्तवपाठादेरपि विघ्ननाशकत्वप्रतिपादनात् प्रमत्तानुष्ठितकर्मसमाप्तिस्थलेऽपि विघ्नसंसर्गाभावस्य द्वारत्वसम्भवेन व्यतिरेकव्यभिचाराभावात्। तत्रेह जन्मनि विनायकस्तवपाठाभावेऽपि पूर्वपूर्वशरीरावच्छेदेन तत्कल्पने बाधकाभावादिति। नन्वेवमपि प्रमत्तानुष्ठितसमाप्तिस्थले मङ्गलस्य व्यतिरेकव्यभिचारित्वेन कथमपि तस्य समाप्तिफलकत्वं न सम्भवतीति चेन्न। अव्यवहितोत्तरत्वसम्बन्धेन स्वविशिष्टसमाप्तिं प्रत्येव मङ्गलस्य कारणत्वकल्पनान्मङ्गलस्य समाप्तिं प्रति व्यतिरेकव्यभिचारित्वं निरस्य पुनरन्वयव्यभिचारमाशङ्क्य तन्निरस्यति। यत्र च साङ्ग इत्यादि। तथाहि कादम्बर्यादौ सम्यगनुष्ठितेऽपि मङ्गले समाप्त्यभावादन्वयव्यभिचारो बोध्यः। मङ्गलस्य स्वजन्यादृष्टद्वारा विघ्नसंसर्गाभावं प्रति प्रयोजकत्वेऽपि न तस्य सर्वप्रकारविघ्नसंसर्गाभावं प्रति तथात्वम्। कादम्बर्यादिस्थले च स्वनाशयोग्यविघ्नानां मङ्गलेन नाशेऽपि तदप्रतिबध्यानां बहुविघ्नानां विद्यमानत्वात् तैः प्रतिरोधात् समाप्त्यभावेऽपि नान्वयव्यभिचार इति तात्पर्यम्।

तन्न विघ्नानुत्पादस्य व्यापारत्वे मानाभावात्। संसर्गाभावत्वेन हेतुत्वात् तथैव व्यापारत्वम्। तच्च प्रागभावेऽप्यस्तीति चेन्न।

अत्यन्ताभावस्यापि व्यापारत्वापत्तेः। स्वतःसिद्धस्य न हेतुत्वं यदि तदा प्रागभावेऽपि तुल्यम्।

एतन्मतं निरस्यति तन्नेत्यादि। तथा ह्यतन्मते विघ्नप्रागभावस्यापि स्वजन्यसमाप्तिं प्रति मङ्गलस्य द्वारत्वमङ्गीकृतम्। निर्विघ्नसमाप्तिकामो मङ्गलमाचरेदिति श्रुत्या विघ्नध्वंसस्यैव द्वारत्वमुक्तं न तु प्रागभावस्यापीति प्रमाणाभावात्तस्य व्यापारत्वं न सम्भवति। तथा च स्वतःसिद्धविघ्नविरह-स्थलीयसमाप्तौ स्वजन्यव्यापाराभावेन समाप्तिं प्रति मङ्गलस्य कारणत्वं न कल्पयितुं योग्यमिति निरासाभिप्रायः। तत्रापि मङ्गलस्य सव्यापारत्वं समर्थयितुं पुनरुद्युङ्क्ते। संसर्गाभावत्वेन हेतुत्वादित्यादि। तथाहि प्रतिबन्धकध्वंसात्यन्ताभावयोः कारणत्वस्य सर्वसम्मतत्वादुभयसंग्रहार्थं तयोः संसर्गाभावत्वेनैव कारणत्वं वाच्यम्। प्रतिबन्धकध्वंसाभावस्य मङ्गलव्यापार-त्वमपि सिद्धमेवास्ते। येन रूपेण हेतुत्वं तेनैव रूपेण व्यापारत्वमिति-नियमाद्धेतुतावच्छेदकीभूतसंसर्गाभावत्वेनैव प्रतिबन्धकध्वंसाभावस्य मङ्गल-व्यापारत्वे सिद्धे तदवच्छेदकीभूतसंसर्गाभावत्वस्य प्रतिबन्धकप्रागभावेऽपि सत्त्वा-त्तस्यापि मङ्गलव्यापारत्वं प्रमाणितं भवतीति शङ्काभिप्रायः। एतन्निरस्यति। अत्यन्ताभावस्यापीत्यादि। तथाहि विघ्नाभावानां संसर्गाभावत्वेन मङ्गल-व्यापारत्वे तद्वतोऽत्यन्ताभावस्यापि मङ्गलव्यापारत्वं प्रसज्यत इति भावार्थः। यदि चात्यन्ताभावस्य स्वत एव सिद्धस्य न व्यापारत्वं सम्भवतीत्युच्येत तदानादित्वेन स्वत एव सिद्धस्य प्रागभावस्यापि व्यापारत्वं नाङ्गीकार्यमिति भावार्थः। अत्यन्ताभावस्य नित्यत्वेन व्यापारत्वाभावेऽपि प्रागभावस्य विनाशि-त्वेन तत् सम्भवत्येव।

किञ्च यत्र मङ्गलं न तत्र नियमेन विघ्नकारणमस्ति, येन तन्नाशद्वारा प्रागभावस्य साध्यत्वम्। एवमपि यत्र विघ्नानुत्-पादोऽपि स्वतःसिद्धस्तत्र मङ्गलमकिञ्चित्करमेव। विघ्नध्वंसानुत्-पादयोरारब्धनिर्वाहकालावस्थायिनोर्मङ्गलादेवोत्पत्तेर्न तदर्थमदृष्ट-द्वारता। मङ्गलस्य विकल्पेनान्वये शिष्टैर्नियमतो मङ्गलानुष्ठानं न स्यादित्युक्तम्।

यस्मिन् सत्यग्रिमक्षणे यस्य सत्त्वमिति पूर्वग्रन्थप्रतिपादितस्य व्यापारत्व-घटकजन्यत्वस्य तत्र सत्त्वादिति चेत्तदापि मङ्गलस्य समाप्तिकारणत्वे दोषमाह। **किञ्च यत्र मङ्गलमित्यादि**। तथाहि यत्र यत्र विघ्नप्रागभावात् प्रारब्धकर्मसमाप्तिस्तेषां सर्वत्र यदि विघ्नप्रागभावनाशकं किञ्चित् प्रामाणिकं स्यात्तदेव मङ्गलस्य विघ्नप्रागभावनाशकारणविनाशद्वारा विघ्नप्रागभावप्रतिपालकत्वं सम्भवेत्। किन्तु सर्वत्र विघ्नप्रागभावनाश-कारणानां सत्त्वे प्रमाणाभावाद् यत्र विघ्नप्रागभावनाशकारणं नास्ति तत्रत्य-प्रागभावस्य मङ्गलप्रतिपाल्यत्वाभावेन तस्य द्वारत्वासम्भवान्न विघ्नसंसर्गाभाव-द्वारापि मङ्गलस्य समाप्तिसाधकत्वं कल्पयितुं योग्यमिति भावार्थः। विघ्नप्रागभावजन्यसमाप्तिस्थलेषु सर्वत्रैव मङ्गलानुष्ठानात् पूर्वं मङ्गल-प्रागभावरूपं विघ्नकारणमस्ति। तथा च समनुष्ठितमङ्गलस्य प्रोक्तविघ्न-कारणनाशद्वारा विघ्नप्रागभावप्रतिपालकत्वसम्भवाद्दोषान्तरमाह **विघ्नध्वंसा-नुत्पादयो**रित्यादि। तथाहि पूर्वं तावन्मङ्गलस्य स्वजन्यादृष्टजन्यविघ्नसंसर्गा-भावद्वारा समारब्धकर्मसमाप्तिं प्रति प्रधानकर्मत्वमुक्तम्। तत्र संसर्गाभावत्वेन विघ्नध्वंसः प्रागभावश्च गृहीतः। विघ्नध्वंसपक्षे तु द्विधा तत्कल्पनं सम्भवति। अन्यस्तावन्मङ्गलसमानकालीनविघ्नानां ध्वंसेन तद्द्वारा मङ्गलस्य समाप्तिसाधनत्वमन्यश्च मङ्गलासमानकालीनानामपि मङ्गलसमाप्तावन्त-र्वर्तिनां विघ्नानां ध्वंसेन तद्द्वारा तस्य तत्साधनत्वमिति। प्रथमपक्षे मङ्गलजन्यादृष्टकल्पना निरर्थिका भवति। मङ्गलसमानकालीनानां विघ्नानाम-दृष्टनिरपेक्षात् केवलादेव मङ्गलान्नाशसम्भवात् तादृशनाशानाञ्चानन्तत्वेन प्रारब्धकर्मसमाप्तिपर्यन्तमवश्यमवस्थानाद्विनैवापूर्वं मङ्गलेन समाप्तिसम्भवा-दिति भावः। द्वितीये तु मङ्गलाचरणस्थलेषु सर्वत्र समारब्धकर्मणां समाप्तिः प्रसज्यते। मध्ये उत्पद्यमानानामपि विघ्नानां मङ्गलजन्यादृष्टेनावश्यं नाश-सम्भवात्। एवं मङ्गलस्य विघ्नप्रागभावप्रतिपालकत्वपक्षेऽपि तज्जन्यादृष्ट-कल्पना न सङ्गच्छते। मङ्गलसमानकालीनानां केषाञ्चित् प्रागभावानां विनैवादृष्टं मङ्गलेन प्रतिपालनसम्भवात्। तादृशानां सकलानां विघ्नप्राग-भावानां प्रतिपालनार्थमदृष्टकल्पने तु मध्यवर्तिकालेष्वपि प्रागभावानामदृष्टेन प्रतिपालनान्मङ्गलाचरणस्थलेषु सर्वत्र समारब्धकर्मणां समाप्तिः प्रसज्यत इति मङ्गलजन्यादृष्टकल्पनं व्यर्थमेवेति तात्पर्यम्। विनायकस्तवपाठादीनां मङ्गलस्य यद् विघ्नसंसर्गाभावं प्रति वैकल्पिकहेतुत्वमुक्तं तन्निरस्यति। **मङ्गलस्येति**।

किञ्च प्रधानत्वे 'साङ्गमङ्गलमात्रं न समाप्तिहेतुस्तस्मिन्

सत्यपि तदभावात्। प्रचितं तथेति चेन्न। अप्रचितादपि सत्त्वात्। नोभयमननुगमात्। गुर्वारम्भे प्रचितमल्पकर्मारम्भेऽल्पमिति चेन्न। क्वचित्तादृशादपि फलासत्त्वाद् वैपरीत्यैऽपि फलसत्त्वाच्च। एतेन बहुविघ्नशङ्कया बहुतरमल्पविघ्नशङ्कयाल्पतरञ्च हेतुस्तादृशाचारेण तादृशश्रुत्युन्नयनादिति निरस्तम्। तादृशादपि प्रारिप्सितासमाप्ते-र्वैपरीत्येऽपि बहुत्वस्य त्रिचतुरादिभावेनाल्पत्वस्य चैकद्व्यादिरूप-तयाननुगमेन तादृशशिष्टाचारेण तादृशश्रुत्या बोधयितुमशक्य-त्वाच्च। तस्मान्मङ्गलं नाङ्गं न वा प्रधानमिति पूर्वपक्षसंक्षेपः।

प्रधानत्व इति। अपूर्वद्वारा समाप्तिरूपप्रधानफलजनकत्व इत्यर्थः। तस्मिन् सत्यपीति। एकमङ्गले कृतेऽपि। तदभावात् समाप्त्यभावात्। पूर्वपक्ष-मुपसंहरति तस्मान्मङ्गलमित्यादि। सर्वथामङ्गलमप्रामाणिकमेवेत्यर्थः।

सिद्धान्तस्तु आरब्धकर्मसमाप्तौ मङ्गलं नाङ्गं न वा प्रधानमहेतु-त्वात्; किन्तु प्रायश्चित्तवत् प्रधानं विघ्नध्वंसः फलम्। आरब्ध-कर्मनिर्वाहे विघ्नो मा भूदिति कामनया तदनुष्ठानात्। विघ्नस्य संशये निश्चये वा शिष्टानां तदाचरणाद्विघ्नाभावस्याकाङ्क्षित-त्वाच्च। यदि च निर्विघ्नं समाप्यतामिति कामनया तदाचरणं तदापि नागृहीतविशेषणन्यायेनाहं स्वर्गी स्यामित्यत्र स्वर्ग इव विघ्नाभाव एव फलं न समाप्तिरुभयतो व्यभिचारात्। समाप्तिस्तु विघ्नरूपप्रतिबन्धकाभावे सति लोकावगतकारणादेव।

मङ्गलस्य फलविषयेऽङ्गप्रधानविषये च पर्ववादिनां मतानि निरस्येदानीं तत्र स्वमतमाह सिद्धान्तस्त्वित्यादिना। आरब्धकर्मसमाप्ताविति। तादृश-कर्महेतुकसमाप्तेरित्यर्थः, षष्ठ्यर्थे सप्तमीप्रयोगात्। चरमवर्णध्वंसरूप-समाप्तिं प्रति प्रतियोगिविधया ग्रन्थात्मकसमारब्धकर्मणो हेतुत्वं बोध्यम्। नाङ्गमिति। न समारब्धकर्मजन्यसमाप्तिविशिष्टमिति तदर्थः। वैशिष्ट्यञ्च स्वनिरूपकान्यथासिद्धिशून्यत्वस्वाव्यवहितपूर्ववर्तित्वैतदुभयसम्बन्धेन। न वा

प्रधानमिति। न चारब्धकर्मविशिष्टमिति तदर्थः। अत्र वेति चार्थे। अत्रापि वैशिष्ठ्यं पूर्वोक्तोभयसम्बन्धेन। नन्वारब्धकर्मप्रतिबन्धकीभूतानां दुरितानां विनाशकत्वे तादृशविनाशद्वारा समाप्तिं प्रत्यपि मङ्गलस्य कारणत्वं स्यादेव। द्वारजनकस्यावश्यं कार्यजनकत्वादिति चेदत्राह। अहेतुत्वादिति। तथाहि स्वतःसिद्धविघ्नविरहस्थले विघ्नध्वंसासत्त्वेऽपि समाप्तिसत्त्वेन तादृशध्वंससत्त्वेऽपि कादम्बर्यादौ समाप्त्यभावेनोभयतो व्यभिचारित्वाद् दुरितध्वंसस्य समाप्तिं प्रति द्वारत्वाभावात्। न चाहेतुत्वे दुरितस्य समाप्तिं प्रति प्रतिबन्धकत्वमपि न स्यात् कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वात्मकत्वादिति वाच्यम्। समाप्तिकारणीभूतस्यात्यन्ताभावस्य प्रतियोगित्वेनैव दुरितस्य समाप्तिप्रतिबन्धकत्वादिति ध्येयम्। किन्त्विति। अपि त्वित्यर्थः। प्रायश्चित्तवदिति। तथाहि प्रायश्चित्तं यथा दुरितध्वंसं प्रति प्रधानं मङ्गलमपि तथा समारब्धकर्मसमाप्तिप्रतिबन्धकीभूतानां दुरितानां ध्वंसं प्रति प्रधानमेव, न तु समाप्तिरूपफलं प्रतीति भावार्थः। मङ्गलस्य विघ्नध्वंसरूपफले प्रधानकर्मत्वपक्षे प्रमाणमाह। आरब्धकर्मनिर्वाह इत्यादि। अत्र निर्वाहपदं समाप्त्यर्थे बोध्यं तदुत्तरविहितसप्तम्या प्रतिबन्धकत्वरूपोऽर्थः समुपस्थाप्यते, अन्वयश्चास्य विघ्ने। तथाचारब्धकर्मसमाप्तिप्रतिबन्धकीभूतो यो विघ्नः स मा भूदित्येवं कामनैव मङ्गलानुष्ठाने प्रवर्तिका। उद्देश्यतया कामनाविषयस्यैव फलत्वाद्विघ्नध्वंस एव प्रदर्शितकामनानुसारेण फलं भवेत्। यद्यपि मा भूदित्यनेन यथाश्रुत्यनुत्पत्तिरेव समुपस्थापिता भवति तथापि प्रकृते मा भूदित्यस्य न तिष्ठत्वित्यर्थो ग्राह्यो ऽन्यथा पूर्वकीर्तितेन ध्वंसफलेनैतद्विरुध्येत। तथाच मङ्गलं विघ्नविनाशकं विघ्नोद्देश्येन शिष्टैस्तत्र प्रवृत्तत्वादित्यनुमानेन मङ्गलस्य विघ्नध्वंसफलकत्वं सिध्यतीति ग्रन्थकृदभिप्रायः।

यदुक्तमुद्देश्यतया कामनाविषयत्वस्य फलत्वज्ञापकत्वेन तद्वत्त्वाद्विघ्नध्वंसो मङ्गलफलमिति तन्न सम्भवति मङ्गलाचरणप्रयोजककामनाया निर्विघ्नं समाप्यतामित्याकारकत्वस्यापि सम्भवात्। एवञ्च सत्युद्देश्यतया कामनाविषयत्वस्य हेतोर्विघ्नध्वंसविशिष्टसमाप्तिगतत्वेन विघ्नध्वंसोद्देश्यकशिष्टप्रवृत्तिविषयत्वस्य मङ्गलविरहादिति चेदत्राह यदि चेत्यादि। तथाहि यथा विशेषणस्याग्रहणे ज्ञानं विशिष्टं न गृह्णाति तथा विशेषणस्य विघ्नध्वंसस्याफलत्वे तद्विशिष्टसमाप्तेरपि मङ्गलफलत्वं न सम्भवति। तथाचोद्देश्यतया कामनाविषयत्वस्यैव तदवच्छेदकतया कामनाविषयत्वस्यापि फलत्वज्ञापकत्वात्। कामनायाः प्रदर्शिताकारत्वपक्षे विघ्नध्वंसो मङ्गलजन्यो मङ्गलाचरणप्रयोजककामनाया उद्देश्यतावच्छेदकत्वेन विषयत्वात्। उद्देश्यतावच्छेदकतया कामना-

विषयत्वस्य फलत्वज्ञापकत्वे दृष्टान्तमाह स्वर्गी स्यामित्यत्र स्वर्ग इवेति। त हि प्रोक्तस्थले स्वर्गविशिष्टस्यात्मनो नित्यत्वेन फलत्वासम्भवात् कामनोद्देश्यतावच्छेदकस्वर्गस्य फलत्वं सर्वसम्मतमिति तद्दृष्टान्तेन कामनोद्देश्यतावच्छेदकत्वस्य फलत्वज्ञापकत्वं सिद्धमिति भावः। अथ स्वर्गो मे भवत्वित्याकारककामनास्थले स्वर्गस्य फलत्वं सर्वसम्मतमिति तद्दृष्टान्तेनोद्देश्यतया कामनाविषयत्वस्यापि फलत्वव्याप्यत्वात् प्रोक्तकामनास्थले चोद्देश्यतया कामनाविषयत्वस्य समाप्तावपि सत्त्वात्तस्या अपि मङ्गलफलत्वं स्यादित्यत्राह **न समाप्तिरुभयतो व्यभिचारादिति।** पूर्वंव्याख्यातमेतत्। प्रारब्धकर्मसमाप्तिर्मङ्गलजन्या मङ्गलाचरणप्रयोजककामनायामुद्देश्यतया विषयत्वादित्यनुमानस्य बाधितविषयत्वान्नानेन समाप्तेर्मङ्गलफलत्वं प्रमाणितं भवतीति तात्पर्यम्। ननु प्रारब्धकर्मसमाप्तेः कारणं किमित्याशङ्कायामुत्तरमाह **समाप्तिस्त्वित्यादि। लोकावगतकारणादेवेति।** प्रतिभाजीवितादेरित्यर्थः।

प्रचिताप्रचितदेवतास्तुत्यादिसाधारणमङ्गलात् प्रत्येकं विघ्नध्वंसो भवत्येव। अतो वैदिके फलनिश्चयान्मङ्गले प्रवृत्तिः। न च वेदाप्रामाण्यम्। समाप्त्यभावश्च क्वचित् प्राचीनविघ्नभूयस्त्वात् क्वचिन्मङ्गलानन्तरोत्पन्नविघ्नात् क्वचिल्लोकावगतकारणाभावात्। प्रारिप्सितविघ्नध्वंसश्च न मङ्गलं विना। न च प्रायश्चित्तेन शङ्कितविघ्नविनाशो विघ्नसंशये तदनुपदेशात्। न च कामनोपाधिकर्तव्यत्वे नियतमनुष्ठानं न स्यादिति वाच्यम्। आरब्धकर्मकारणप्रतिबन्धकाभावोपायत्वेनावश्यं तदनुष्ठानात्। तेन विना प्रतिबन्धकाभावाभावात् कर्मानुत्पत्तेः।

ननु यत्र कृतेऽपि प्रचुरमङ्गले कादम्बर्यादौ समाप्तिर्न जाता तत्रावश्यं समाप्तिप्रतिबन्धकीभूतो विघ्नः स्वीकार्यः। तथाच विघ्नध्वंसं प्रत्यन्वयव्यभिचारात् कथं मङ्गलस्य विघ्नध्वंसफलकत्वं सम्भवतीति चेदत्राह **प्रचिताप्रचितदेवतास्तुत्यादीत्यादि।** प्रत्येकमिति। विनायकस्तवादिरूपमङ्गलनाश्यतावच्छेदकीभूतवैजात्यविशिष्टानां दुरितानां तादृशस्तवाद्यात्मकमङ्गलान्नाशस्तथा नमस्काराद्यात्मकमङ्गलनाश्यतावच्छेदकीभूतवैजात्याक्रान्तानां दुरितानां तादृशनमस्काराद्यात्मकमङ्गलाद् विनाशोऽस्त्येवेति नान्वयव्यभिचार

इति भावः। **अत** इत्यादि। तथाहि समाप्तिफलकत्ववादे **फलसंशयादपि** मङ्गलविषयकप्रवृत्तिस्वीकारेण यथा वेदविहितकर्मणि फलनिश्चयात् प्रवृत्तिरिति नियमस्य बाधो भवति विघ्ननाशफलकत्वे न तन्नियमस्य तथा बाधो भवेत्। सर्वत्रैव मङ्गले विघ्नविनाशात्मकफलकत्वविनिर्णयसम्भवादिति भावार्थः। **न च वेदाप्रामाण्यमिति।** तथाहि स्वतःसिद्धविघ्नात्यन्ताभावस्थलीयमङ्गलस्य विघ्नध्वंसात्मकफलवत्त्वाभावेन विघ्नध्वंसकामो मङ्गलमाचरेदिति श्रुतेरप्रामाण्यमपि नाशङ्कनीयं तत्र मङ्गलस्य साङ्गत्वाभावात् साङ्गस्यैव मङ्गलस्य श्रुत्या विघ्नध्वंसहेतुत्वप्रतिपादनात्। मङ्गलेन विघ्नध्वंसजनने विघ्नस्यापि तदङ्गत्वादिति भावार्थः। ननु मङ्गलं यदि बिघ्नध्वंसफलकं तदा कादम्बर्यादावसमाप्तिः कथमिति चेत्तत्राह **समाप्त्यभावश्च क्वचिदित्यादि।** नन्वेवमपि प्रायश्चित्तादिजन्यदुरितध्वंसस्थले मङ्गलाभावाद् व्यतिरेकव्यभिचारित्वेन कथं मङ्गलस्य दुरितध्वंसहेतुत्वं स्यादित्याशङ्कायामाह **प्रारिप्सितेत्यादि।** तथाच मङ्गलनाश्यतावच्छेदकीभूतवैजात्याक्रान्तदुरितविशेषाणां विनाशं प्रत्येव मङ्गलस्य हेतुत्वात्। तादृशविजातीयदुरितानां नाशस्थले च सर्वत्रैव मङ्गलसत्त्वान्न व्यतिरेकव्यभिचार इति भावार्थः। **कामनोपाधिकर्तव्यत्व** इति। मङ्गलस्य विघ्नध्वंसकामनाधीनप्रवृत्तिविषयत्व इत्यर्थः। **नियतमनुष्ठानं न स्यादितीति।** यत्र विघ्नज्ञानं नास्ति तत्र कर्मारम्भात् पूर्वं शिष्टैरपि मङ्गलं नानुष्ठीयेतेत्यर्थः। विघ्नज्ञानाभावे विघ्नध्वंसकामनाया असम्भवात्। अत्रेष्टापत्तिमाह **आरब्धकर्मकारणेत्यादि।** **आरब्धकर्मकारणेति।** आरब्धकर्मसमाप्तिकारणेति तदर्थः। **प्रतिबन्धकाभावोपायत्वेनेति।** प्रतिबन्धकध्वंसजनकत्वप्रकारकज्ञानेनेत्यर्थः। **अवश्यं तदनुष्ठानादिति।** नियतं मङ्गलस्याचरणादित्यर्थः। तथाच प्रारब्धकर्मप्रतिबन्धकानि यानि दुरितानि तेषां ये विनाशास्तज्जनकत्वप्रकारकमङ्गलविशेष्यकज्ञानस्यैव मङ्गलाचरणप्रवृत्तौ प्रयोजकत्वाद् यत्र विघ्नस्यैवाज्ञानं तत्र कारणाभावेन कर्मारम्भात् पूर्वं मङ्गलानाचरणमिष्टमेवेति भावार्थः। ननु मङ्गलस्य दुरितध्वंसमात्रजनकत्वे यत्र मङ्गलं नानुष्ठितं तत्र विघ्नध्वंसाभावेऽपि प्रारब्धकर्मणः समाप्तिः स्यादित्यत्राह **तेन विनेत्यादि।** तथाहि तत्र मङ्गलानुष्ठानाभावेन समाप्तिकारणस्य प्रतिबन्धकीभूतदुरितध्वंसस्यासत्त्वेन सामग्र्यभावान्न समाप्तिर्भवितुमर्हतीति भावार्थः।

न च प्रधानत्वे नान्यदापि तत् करणं नियतसमयशिष्टाचारानु-

मितश्रुत्या कर्मारम्भसमये 'तत्कर्तव्यत्वबोधनाद् दर्शारम्भसमये आरम्भणीयावत् । विघ्नसंसर्गाभावश्च समाप्तिहेतुः । स च क्वचित् स्वतःसिद्धः क्वचिन्मङ्गलसाध्यः । अत एव मङ्गलं विनापि जन्मान्तरानुवर्तमानविघ्नात्यन्ताभावात् प्रमत्तनास्तिकानुष्ठित-समाप्तिः । न चानध्यवसायः । शङ्कितविघ्नवारणार्थं प्रवृत्तिरतो यावद्विघ्नशङ्कं तदाचरणात् । अतएव तच्छङ्कया मध्येऽपि तदाचरन्ति । गुर्वारम्भेऽपि बहुविघ्नशङ्कया बहुमङ्गला-चरणम् । यथा च विघ्नसंशयेऽपि प्रवृत्तिस्तथोक्तमेव ।

न च प्रधानत्वे नान्यदापीत्यादि प्रमत्तनास्तिकानुष्ठितसमाप्तिरित्यन्त-ग्रन्थो व्याख्यातपूर्वः । न चानध्यवसाय इति । अननुगतांना मङ्गलानां स्तुतिनत्यादिभेदेन नानाविधत्वात् प्रचुराप्रचुराभ्यामप्यनियतत्वा-द्विघ्नानामपि वैजात्यभेदेन भिन्नत्वात् कुत्र कीदृशं कियद्वा मङ्गलमाचरणीय-मित्याशङ्कया मङ्गलमनाचरणीयमिति न । सन्देहविषयीभूतविघ्ननाशार्थमेव मङ्गलस्य विहितत्वादित्यर्थः । यावद्विघ्नशङ्कं तदाचरणादिति । तथाहि स्तुतिनाश्यतावच्छेदकवैजात्यापन्नविघ्नानां शङ्कायां स्तुत्यात्मकं मङ्गलं नतिना-श्यतावच्छेदकवैजात्यविशिष्टविघ्नानामाशङ्काविषयत्वे तन्नाशार्थं नमस्कारात्मकं मङ्गलं प्रचुरविघ्नाशङ्कायां प्रचुरं मङ्गलमप्रचुरविघ्नाशङ्कायामप्रचुरं मङ्गल-माचरणीयमिति न तादृशशङ्कायां मङ्गलस्यानाचरणीयत्वं प्रसज्यत इति तात्-पर्यम् । अन्यत् सुगमम् ।

स्यादेतन्मङ्गलमाचरेदिति विधौ किं मङ्गलत्वम् ? न ताव-द्देवतास्तुत्यादित्वमननुगमात् । नापि प्रारिप्सितप्रतिबन्धकविघ्नो-पशमहेतुक्रियात्वं विघ्नोत्सारणासाधारणकारणत्वं वा, क्रिया-विशेषस्य तदसाधारणकारणस्य वा स्तुत्यादेर्वेदाद्विशिष्यापरिचये प्रवृत्तिविषयालाभात् । नापि निर्विघ्नं समाप्यतामिति कामनया शिष्टाचारविषयत्वं वेदस्याचारानुपजीवकत्वाद्वेदाद्याचारानुप-पत्तेश्चान्योन्याश्रयात् । नापि तत्कामनया वेदविहितत्वं प्रारिप्सित-कर्मनिर्वाहकत्वे सति कर्मारम्भकाले विहितवैदिककर्मत्वं वा,

तादृशवेदान्तराभावात् । नापि स्मृत्यादौ मङ्गलत्वेनोत्कीर्तितत्वम् । वेदस्य स्मृत्यनुपजीवकत्वात् स्मृतिकर्तुरेव वेदादाद्याचारानुपपत्तेश्च ।

स्वमतेन मङ्गलस्य विघ्नध्वंसफलकप्रधानकर्मत्वं सिद्धान्ततया व्यवस्थाप्येदानीं मङ्गलत्वस्य स्वरूपं प्रतिपादयितुमाह । **स्यादेतदित्यादि । विधाविति ।** अत्र प्रतिपाद्यत्वं सप्तम्यर्थः । अन्वयश्चास्य मङ्गलत्वे बोध्यः । तथा च मङ्गलमाचरेदित्याकारको यो विधिस्तत्प्रतिपाद्यं मङ्गलत्वं किंस्वरूपमिति वाक्यार्थः । **न तावद्देवतास्तुत्यादित्वमिति ।** तावदिति वाक्यालङ्कारे । तथा च देवतास्तुत्यादित्वं न मङ्गलत्वमननुगमादिति हेतोः । आदित्वस्यानुगतस्य निर्वचनासम्भवादादित्वघटितं मङ्गलत्वं न सर्वमङ्गलसाधारणो धर्मो भवितुमर्हतीति भावार्थः । **नापीत्यादि ।** प्रारिप्सितप्रतिबन्धकविघ्नोपशमहेतुक्रियात्वमपि न मङ्गलत्वस्य स्वरूपमित्यर्थः । **प्रारिप्सितप्रतिबन्धकेति ।** प्रारिप्सितसमाप्तिप्रतिबन्धकेत्यर्थः । **विघ्न इति ।** अत्र विघ्नपदं दुरितार्थे बोध्यं, न तु विघ्नत्वमपि प्रविष्टं, तस्य प्रवेशे प्रतिबन्धकान्तमव्यावर्तकं स्याद् । विघ्नत्वस्य प्रारिप्सितसमाप्तिप्रतिबन्धकत्वात्मकत्वात् । दुरितत्वस्यापूर्वत्वव्याप्यवैजात्यरूपत्वेन प्रतिबन्धकत्वाघटितत्वात्तत्र प्रारिप्सितसमाप्तिप्रतिबन्धकत्वरूपविशेषणस्य व्यावृत्तिसम्भवात् । अत्र दुरिते प्रतिबन्धकत्वस्य विशेषणतया अप्रवेशे दुरितोपशमहेतुक्रियात्वमेव मङ्गलत्वं स्यात् । एतत्त न सम्भवति । वैधगङ्गास्नानप्रायश्चित्तादावतिव्याप्तेः । तत्तत्क्रियाया अप्यगम्यागमनब्रह्महत्यादिजन्यदुरितनाशकत्वस्य सत्त्वात् । प्रतिबन्धकनिरूपकतया प्रारिप्सितकर्मसमाप्तेरप्रवेशे कारीर्यादौ मङ्गलत्वस्यातिव्याप्तिः स्यात् । तस्या अपि यागात्मकक्रियाया वृष्टिप्रतिबन्धकदुरितनाशहेतुत्वस्य सत्त्वात् । प्रारिप्सितकर्मसमाप्तिप्रतिबन्धकत्वस्य दुरिते विशेषणत्वेन प्रवेशे तु न तत्र तत्रातिव्याप्तिः सम्भवति । कथितदुरितेषु प्रारिप्सितकर्मसमाप्तिप्रतिबन्धकत्वस्यासत्त्वात् । अत्र क्रियात्वस्य विशेष्यतया अप्रवेशे प्रारिप्सितप्रतिबन्धकदुरितोपशमहेतुत्वमेव मङ्गलत्वं भवति । तच्चायुक्तम् । समाप्तिप्रतिबन्धकदुरिते तस्यातिव्याप्तेः । दुरितनाशं प्रति प्रतियोगितया दुरितस्यापि हेतुत्वात् । क्रियात्वस्य प्रवेशे तु नातिव्याप्तिः । तस्य गुणत्वेन क्रियात्वाभावात् । नतिस्तुत्यादिमङ्गले पुनरेतल्लक्षणं सङ्गच्छते । तत्र प्रारिप्सितकर्मसमाप्तिप्रतिबन्धकदुरितानां नाशहेतुत्वस्य च क्रियात्वस्य च सत्त्वात् ।

एतल्लक्षणस्य मङ्गलानात्मके विनायकस्तुत्यादिपाठेऽतिव्याप्तेर्लक्षणान्तरमाह। **विघ्नोत्सारणेत्यादि**। विनायकस्तुतेर्मङ्गलत्वेऽपि न कण्ठताल्वाद्यभिघातात्मक-तत्पाठस्य तथात्वम्। सर्वे विघ्ना शमं यान्तीत्यादिस्मृत्या पाठस्यापि विघ्नोपशमहेतुत्वकीर्तनात्तत्र प्रारिप्सितकर्मसमाप्तिप्रतिबन्धकदुरितोपशमहेतु-क्रियात्वस्य सत्त्वादतिव्याप्तिर्बोध्या। द्वितीये तु विघ्नध्वंसासाधारण-कारणत्वस्य मङ्गलत्वमुक्तम्। अत्र मङ्गलनाश्यतावच्छेदकवैजात्यवत्त्वेन दुरितानां प्रवेशो बोध्यस्तादृशविजातीयदुरितानां कारीरीप्रायश्चित्तादिभिर-नाशान्न तेषु लक्षणस्यातिव्याप्तिरिति भावः। विनायकस्तवपाठादेर्दुरित-नाशकत्वेऽपि न तादृशं दुरितं मङ्गलनाश्यतावच्छेदकीभूतवैजात्यवद्भवति, स्तवस्य मङ्गलत्वेऽपि तत्पाठस्य मङ्गलानात्मकत्वात्। असाधारणत्वस्या-प्रवेशे तादृशदुरिते मङ्गलत्वस्यातिव्याप्तिर्भवति। तद्दुरितस्यापि स्वनाशं प्रति प्रतियोगिविधया हेतुत्वात्। असाधारणत्वस्य प्रवेशे पुनः सा न स्यात् प्रतियोगितासम्बन्धेन नाशं प्रति तादात्म्येन जन्यभावानां सामान्यतो यत् कारणत्वमस्ति तेनैव निर्वाहे नाशं प्रति प्रतियोगिनोऽसाधारणकारणत्वाभावात्। इदानीं मङ्गलस्य प्रदर्शितलक्षणद्वयं निरस्यति। **क्रियाविशेषस्येत्यादि**। तथाहि प्रथमलक्षणे क्रियाविशेषस्य मङ्गलत्वमुक्तम्। तदयुक्तम्। अन्योन्या-श्रयत्वदोषात्। नमस्कारादिरूपक्रियायां प्रारिप्सितकर्मसमाप्तिप्रतिबन्धकदुरित-नाशहेतुत्वं वेदैकगम्यं प्रमाणान्तरेण तज्ज्ञानासम्भवात्। तादृशक्रिया-विषयकप्रवृत्तिं प्रत्यपि विघ्नध्वंसकामो मङ्गलमाचरेदित्यादिवैदिकवाक्यमेव प्रमाणम्। तथा चोक्तविधिवाक्यद्वारा नमस्कारादिक्रियाविशेषस्य मङ्गलत्व-ज्ञानं तज्ज्ञानानन्तरं च विधिवाक्यान्मङ्गले लोकः प्रवर्तेत। तथा च मङ्गलत्वज्ञानात् प्रवृत्तिविषयलाभः प्रवृत्तिविषयलाभाच्च मङ्गलत्व-ज्ञानमिति परस्पराश्रयत्वम्। द्वितीयलक्षणेऽपि देवतास्तुत्यादेर्विधिवाक्यादेव विघ्नोत्सारणासाधारणकारणत्वज्ञानं, तादृशकारणत्वज्ञानाच्च प्रवृत्तिविषयत्व-लाभ इत्यन्योन्याश्रयत्वं बोध्यम्। **विशिष्यापरिचय** इति। प्रारि-प्सितकर्मसमाप्तिप्रतिबन्धकदुरितनाशहेतुत्वविघ्नोत्सारणासाधारणकारणत्वाभ्यां विशेषणाभ्यां मङ्गलस्य ज्ञानाभाव इति तदर्थः। **नापि निर्विघ्नमित्यादि**। तथा च दुरितध्वंसविशिष्टसमाप्त्युपादानककामनाप्रयोज्यशिष्टाचारविषयत्वं मङ्गलत्वमिति फलितम्। तादृशशिष्टाचारविषयत्वस्य स्तुतिनमस्कारादौ सत्त्वा-ल्लक्षणसमन्वयो बोध्यः। अत्रापि दोषमाह। **वेदस्याचारानुपजीवकत्वादिति**। शिष्टाचारानधीनत्वादित्यर्थः। तथा ह्युक्तलक्षणानुसारेण मङ्गलपदार्थज्ञाने शिष्टाचारज्ञानमपेक्षितमस्ति। एवञ्च विघ्नध्वंसकामो मङ्गलमाचरेदिति

वेदवाक्यजन्यशाब्दबोधे शिष्टाचारस्य प्रयोजकत्वेन विघ्नस्यापि तद्द्वारा शिष्टाचारसापेक्षत्वमायाति। एतदयुक्तं सिद्धान्तविरोधात्। दोषान्तरमाह। **वेदादाद्याचारानुपपत्तेश्चेति।** तथाहि पुरुषविशेषस्य वेदाधीनमङ्गलानुष्ठाने पुरुषान्तरीयं तदनुष्ठानज्ञानं स्वीयस्य वा कालान्तरीणमङ्गलानुष्ठानज्ञानं मङ्गलविधायकवेदाधीनशाब्दबोधे मङ्गलपदशक्तिग्रहद्वारापेक्षितमस्ति। एतच्च न सम्भवति अन्योन्याश्रयात्। वेदार्थज्ञानजन्यं मङ्गलस्य शिष्टैरनुष्ठानं तदनुष्ठानज्ञानसापेक्षञ्च वेदार्थज्ञानमित्यन्योन्याश्रयो बोध्यः। **नापि तत्कामनया वेदविहितत्वमिति।** तत्कामनयेति। विघ्नध्वंसकामनयेत्यर्थः। तृतीया प्रकारकत्वार्थे न जन्यत्वार्थे, वेदवाक्यजन्यशाब्दबोधे कामनाया जनकत्वाभावात्। तथा च विघ्नध्वंसकामनावत्पुरुषकर्तव्यत्वप्रकारेण वेदविहितत्वमिति पर्यवसितोऽर्थः। **वेदविहितत्वमिति।** विधायकश्रुतिप्रयोज्यशाब्दबोधविषयत्वमिति तदर्थः। एवञ्च तत्कामनया वेदविहितत्वमिति ग्रन्थेन विघ्नध्वंसकामिकर्तव्यत्वप्रकारको यो विधायकश्रुतिजन्यः शाब्दबोधस्तद्विषयत्वस्य मङ्गलत्वात्मकत्वं प्रतिपादितमिति भावार्थः। अत्र विघ्नपदस्य समारब्धकर्मप्रतिबन्धकीभूतदुरितार्थकत्वान्नैतल्लक्षणस्य प्रायश्चित्तादावतिव्याप्तिः शङ्कनीया। **प्रारिप्सितेत्यादि।** प्रारिप्सितकर्मसमाप्तिनिर्वाहकत्वे सति कर्मारम्भकाले विहितवैदिककर्मत्वं मङ्गलत्वमिति भावः। विहितवैदिककर्मत्वस्य यागादावपि सत्त्वात् सत्यन्तम्। एवञ्च यागादौ नातिव्याप्तिस्तस्य प्रारिप्सितकर्मसमाप्तिं प्रति निर्वाहकत्वाभावात्। यागस्वरूपनिर्वाहकाङ्गेऽतिव्याप्तिवारणाय कर्मारम्भकालीनत्वं विहितवैदिककर्मत्वे विशेषणम्। कर्मारम्भपूर्वकालीनत्वमिति तदर्थः। कर्मारम्भादनन्तरमपि तादृशाङ्गानामनुष्ठेयत्वेन कर्मारम्भपूर्वकालीनत्वाभावान्न तेष्वतिव्याप्तिरिति ध्येयम्। आरम्भणीययागादेः कर्मारम्भपूर्वकालीनत्वेऽपि कर्मनिर्वाहकत्वाभावान्न तत्रातिव्याप्तिर्भवेत्। नतिस्तुत्यादीनाञ्च कर्मारम्भपूर्वकालीनत्वादारब्धकर्मनिर्वाहकत्वात् कर्तव्यत्वेन वेदबोधितत्वाच्च तत्र तत्र लक्षणसङ्गतिर्बोध्या। एतदपि लक्षणद्वयं दूषयति। **तादृशवेदान्तराभावादिति।** तथा च मङ्गलविधायकश्रुत्यर्थज्ञाने मङ्गलत्वज्ञानं मङ्गलत्वज्ञाने च तादृशश्रुत्यर्थज्ञानमिति ज्ञप्तावन्योन्याश्रयान्नैतादृशं मङ्गलत्वं निर्वक्तुमलमिति भावः। **नापीत्यादि।** एवञ्च न अन्योन्याश्रयः। स्मृतिवाक्यतो मङ्गलत्वज्ञानं तदनन्तरञ्च विघ्नध्वंसकामो मङ्गलमाचरेदिति विध्यर्थज्ञाने स्वस्य स्वापेक्षितत्वाभावात्। एतदपि दूषयति। वेदस्य **स्मृत्यनुपजीवकत्वादिति।** दोषान्तरमाह। **स्मृतिकर्तुरेवेत्यादि।** तथाहि स्मृत्या मङ्गलत्वज्ञाने स्मृतिकर्तुर्मङ्गलाचरणं नोप-

पद्यते। तदानीमपि स्मृत्यभावेन मङ्गलत्वस्याज्ञानात्। तदज्ञाने च तद्घटित-वेदार्थोऽपि न स्मृतिकर्त्रा ज्ञातुं शक्य इति विध्यर्थाज्ञाने विधेयानुष्ठानाभावा-दिति तात्पर्यम्।

अत्रोच्यते। मङ्गलमाचरेदिति न विधिः किन्तु निर्विघ्न-समाप्तिकामो देवतास्तुतिमाचरेदित्यादि प्रत्येकमेव विधिस्तथैव शिष्टाचारात्। तदुपजीव्य निर्विघ्नमारब्धं परिसमाप्यतामिति कामनया तद्विघ्नोपशमहेतुत्वेन वा वेदविहितत्वं मङ्गलत्वमित्यधिगम्य देवतास्तुतिनमस्कारादिषु मङ्गलव्यवहारः शिष्टानामिति। अतएव दुरितनाशकमपि गङ्गास्नानादि न मङ्गलं तथाऽविधानात्। "मङ्गलाचारयुक्तानां नित्यञ्च प्रयतात्मनाम्। जपतां जुह्वताञ्चैव विनिपातो न विद्यते॥" इत्यनेन बोधितदर्पणदर्शनादेः पृथगेव मङ्गलत्वं, न तु विघ्ननिवर्तकतया तत्र नानार्थतैव। अन्यथा ग्रन्थारम्भे नमस्कारतुल्यतया तत्करणप्रसङ्गः।

इदानीं मङ्गलत्वस्वरूपे स्वसिद्धान्तमाह। **अत्रोच्यत** इत्यादि। समाधानं कथ्यत इत्यर्थः। **न विधिरिति**। स्तुतिनत्यादिसाधारणमङ्गलत्वस्य निर्वचनान-र्हत्वान्मङ्गलमाचरेदेवं सामान्यविधिर्न सम्भवतीति तात्पर्यम्। **किन्त्विति** अपीत्यर्थः। **निर्विघ्नसमाप्तिकामो देवतास्तुतिमाचरेदित्यादीति**। प्रदर्शित-श्रुत्या विधेः समाप्तिकामनाप्रयोज्यत्वकथनं साम्प्रदायिकमतानुसारेण, स्वमते समाप्तेर्मङ्गलाजन्यत्वात्। स्वमते तु विघ्ननाशकामो देवतास्तुतिमाचरेदित्येव विधेराकारः स्यात्। **प्रत्येकमेव विधिरिति**। विघ्ननाशकामः स्तुतिं कुर्या-न्नमस्कारमाचरेद्, भगवन्नामकीर्तनं कुर्यादित्येवं स्तुत्यादिफलव्यक्तिभेदेन भिन्नभिन्न एव विधिः कल्पनीय इति मणिकाराभिप्रायः। एवञ्च विधिशरीरे मङ्गलत्वस्याप्रवेशान्न तदननुगमनिबन्धनो दोषः। अथ मङ्गलमाचरेदित्या-कारको न विधिरपि तु देवतास्तुत्यादिकमाचरेदित्याकारक एव विधिरित्यत्र किं नियामकमिति चेदत्राह। **तथैव शिष्टाचारादिति**। तथा हि मङ्गलविधायक-श्रुतिर्न प्रत्यक्षलब्धा, अपि त्वनुमानादेव कल्पनीया। लिङ्गञ्च शिष्टाचारः। शिष्टाः खलु प्रारब्धकर्मारम्भे नतिस्तुत्यादिकमाचरन्तीति दृष्ट्वैव तेषामाचारेण

विधायकश्रुतिः कल्प्यते। शिष्टानामाचारश्च भिन्नभिन्न एव। क्वचित् ते स्तुतिमाचरन्ति क्वचिद्वा नतिमनुतिष्ठन्ति क्वचिद्वोभयम्। एतेऽपि कायिक-वाचिकमानसिकभेदात् पुनर्भिन्नभिन्ना एव। तथाच विभिन्नविषयका-चरणात्तेन लिङ्गेन स्तुतीत्यादिविभिन्नधर्मैर्विधायकश्रुतिरवश्यं कल्पनीयेति तात्पर्यम्। **तदुपजीव्येत्यादि**। तत्तद्विध्यर्थज्ञानं सहकारीकृत्येत्यर्थः। एवञ्च निर्विघ्नमारब्धं परिसमाप्यतामिति कामनाप्रकारकविधिवाक्यजन्य-शाब्दबोधविषयत्वं मङ्गलत्वमित्येवं निश्चित्य लोकानां स्तुतिनत्यादिषु मङ्गल-पदव्यवहारो भवतीति परमार्थः। समाप्तिप्रवेशः सम्प्रदायानुरोधात्। स्वमते तु समारब्धकर्मप्रतिबन्धकदुरितोपशमहेतुत्वेन वेदविहितत्वमेव मङ्गलत्वमिति बोध्यम्। अतएव मतभेदेन लक्षणद्वयमुपस्थापितं ग्रन्थकृता। पूर्वपूर्वलक्षणे-ष्विवानयोर्लक्षणयोर्नान्योन्याश्रयत्वादिदोषः। तथाहि मङ्गलविधायकश्रुते-र्देवतास्तुतिमाचरेन् नतिं कुर्यादित्येवमाकारत्वे श्रुत्यर्थबोधे श्रुतिघटकस्तुत्यादि-पदानामर्थज्ञानमपेक्षितं न तु मङ्गलपदस्य। प्रदर्शितलक्षणज्ञाने च मङ्गल-पदस्यार्थज्ञानमावश्यकं न स्तुत्यादिपदानामर्थज्ञानम्। तथा च मङ्गलपदार्थज्ञाने मङ्गलज्ञानस्यानावश्यकत्वेन नान्योन्याश्रयो बोध्यः। **अतएव दुरितनाशकमपी-त्यादि**। **तथाऽविधानादिति**। तथाहि पापध्वंसकामो गङ्गायां स्नायादित्याद्या-कारकगङ्गास्नानविधौ सामान्यतो दुरितनाशकामनाधिकारत्वेनोपदिष्टा, मङ्गल-विधायकश्रुतौ च प्रारब्धकर्मसमाप्तिप्रतिबन्धकदुरितध्वंसकामो देवतास्तुतिमा-चरेदित्याद्याकारिकायां तादृशविशेषदुरितानां विनाशकामनाधिकारत्वेनाधिकृता। अतो विघ्नविशेषोपशमहेतुत्वस्य गङ्गास्नानादावभावान्न तत्र मङ्गललक्षण-स्यातिव्याप्तिरिति भावार्थः। **मङ्गलाचारयुक्तानामित्यादि**। तत्र मङ्गलाचार-पदेन दर्पणदर्शनादेरभिधानं बोध्यम्। **विनिपात** इति दुरितमिति तदर्थः। **न विद्यत** इति। न भवतीत्यर्थः। तथाच मङ्गलाचारयुक्तानां जनानां दुरितं नोत्पद्यत इति ग्रन्थोद्धृतस्मृतिवाक्यस्यार्थः। पूर्वन्तु प्रारब्धकर्मप्रतिबन्धक-दुरितनाशकत्वेन वेदविहितत्वस्य स्तुतिनत्यादिसाधारणं मङ्गलत्वमुक्तम्। प्रदर्शितस्मृतिवाक्यान्तर्गतमङ्गलपदार्थे दर्पणदर्शनादौ तन्न सङ्गच्छते। तस्य तादृशदुरितनाशकत्वेन विहितत्वाभावात्। दुरितमात्रप्रागभावप्रतिपालकत्वेनैव मङ्गलाचारादेः स्मृत्याभिधानात्। एवञ्च स्मृत्युक्तमङ्गलपदार्थे तादृश-मङ्गलत्वस्यासत्त्वात् कथं ग्रन्थकृदुक्तं मङ्गलत्वमनुगतं भवितुमर्हतीत्यापत्तौ समाधानमाह। **पृथगेव मङ्गलत्वमिति**। तथा च मङ्गलपदस्य नानार्थतया तद्विघ्नोपशमहेतुत्वेन वेदविहितत्वरूपमङ्गलत्वस्यादर्शदर्शनादावसत्त्वेऽपि न दोष इति तात्पर्यम्।

अथशब्दो विघ्ननिवर्तकत्वान्मङ्गलमेव । "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा तु निर्यातौ तेन माङ्गलिकावुभौ ॥" इति स्मृतेः । न च शुभसूचकत्वमेव तस्य शास्त्रारम्भे महर्षिणा तदनुपादानप्रसङ्गात् । गुणवत्तया ज्ञापनं स्तुतिः । यमुद्दिश्य यस्य स्वापकर्षबोधनानुकूलो व्यापारविशेषः स तस्य नमस्कारः । व्यापारे च कायिकवाचिकमानसिकरूपे विशेषो जातिविशेष एवानुभवसाक्षिकः करशिरःसंयोगमात्रे तदव्यवहाराद् भवतोऽहमपकृष्ट इत्यादिवचने तदव्यवहाराच्च । यद्वा कायिकादौ प्रत्येकमेव विधिकल्पनम् । अतो नानार्थतैव । यत्तु बुद्धिविशेषपूर्वकत्वज्ञानं विना कायिकादौ न तद्व्यवहार इति स एव वाच्योऽन्यत्र लक्षणेति तन्न । कायिकादिव्यापारविशेषमनवगम्य बुद्धिविशेषपूर्वकत्वाज्ञानात् ।

अथशब्दस्य निरुक्तमङ्गलत्वं प्रतिपादयति । **अथशब्द** इत्यादि । तत्र प्रमाणमाह । **ओङ्कारश्चाथशब्दश्चे**त्यादि । **पुरे**ति । सृष्टेरारम्भे । अनुगतं स्तुतिपदार्थमाह । **गुणवत्तया ज्ञापनं स्तुतिरि**ति । **गुणवत्तये**ति । उत्कर्षवत्त्वेनेत्यर्थः । **ज्ञापन**मिति । ज्ञानानुकूलशब्दात्मको व्यापार इत्यर्थः । तेन शब्दानात्मकतादृशव्यापारे नातिव्याप्तिः । तथाचोत्कर्षवत्त्वप्रकारकज्ञानजनकशब्दः स्तुतिरिति पर्यवसितोऽर्थः । इदानीं नमस्कारपदार्थमाह । **यमुद्दिश्य यस्ये**त्यादि । स्वापकर्षबोधजनकतावच्छेदकवैजात्यवत्त्वमेव कायिकादिसाधारणं नमस्कारत्वं बोध्यम् । तादृशजातेः प्रत्यक्षसिद्धत्वमाह । **अनुभवसाक्षिक** इति । कायिकादिसाधारणवैजात्यस्यास्वीकारपक्षे नमस्कारपदस्य नानार्थतामाह । **यद्वे**त्यादि । तथा चैतन्मते नमस्कारपदं नानार्थकमिति बोध्यम् । मतान्तरमाह । **यत्त्वि**ति । तथाहि करकपालसंयोगादिरूपव्यापारे तदैव कायिकनमस्कारत्वरूपवैजात्यं स्याद् यदि तत्र स्वीयापकर्षबोधपूर्वकत्वं गृहीतं स्यात् । विना स्वापकर्षबोधं तादृशव्यापारस्य नमस्कारत्वास्वीकारात् । तथाच तादृशव्यापारोपधायकमानसबोधविशेष एव नमस्कारपदस्य मुख्योऽर्थः । तत्सापेक्षकरकपालसंयोगादौ तु नमस्कारपदं भाक्तमेव । एवञ्च मानसबोधविशेषस्यैव नमस्कारत्वान्न नानार्थतेत्यभिमानः ।

स्वीकृतवेदप्रमाणभावः शिष्टः। आचारे च वेदानिषिद्धत्वमविगीतत्वं विशेषणं देयम्। यद्वा, अलौकिकविषयशिष्टाचारत्वमेव हेतुः। शिष्टाचारत्वञ्च भ्रमाजन्याचारत्वम्। आस्तिकनास्तिकयोरगम्यागमनचैत्यवन्दनादावाचारजनकज्ञानस्य भ्रमत्वाद् बलवदनिष्टानुबन्धित्वादिष्टसाधनत्वाच्च। लोके च पाषण्डव्यावृत्तशिष्टव्यवहारो वेदप्रामाण्याभ्युपगमनिबन्धनः। तैर्थिकत्वेऽपि शिष्टाशिष्टव्यवहारो वेदनिषिद्धाकर्तृत्वतत्कर्तृत्वनिबन्धनः। यद्वा, वेदप्रामाण्याभ्युपगन्तृत्वे सति यो यदा वेदनिषिद्धाकर्ता स तदा शिष्टस्तत्कर्तृत्वशिष्टः। अतएव वेदनिषिद्धाकर्तृत्वेऽपि बौद्धो न शिष्टः। पापजनकत्वज्ञानं विना वेदनिषिद्धकर्तृत्वं यस्य नास्ति स शिष्ट इति तु न तैर्थिकस्यापि कस्यचित् पापजनकत्वज्ञानं विना वेदनिषिद्धकर्तृत्वात्।

पूर्वं तावन्मङ्गलं वेदबोधितसमाप्तिसाधनताकं समाप्त्युद्देश्यकाविगीतशिष्टाचारविषयत्वादित्यनुमानेन मङ्गलस्य समाप्तिसाधकत्वप्रतिपादकश्रुत्यनुमानं साम्प्रदायिकमतानुसारेण प्रदर्शितम्। तत्र लिङ्गशरीरप्रविष्टं शिष्टत्वं किमित्याकाङ्क्षायामाह। **स्वीकृतवेदप्रमाणभावः** शिष्ट इति। प्रमाणभावः प्रामाण्यमित्यर्थः। ये तावद् वेदस्य प्रामाण्यं स्वीकुर्वन्ति त एवैतन्मते शिष्टा इति बोध्यम्। हिंसानिषेधश्रुत्यात्मकवेदभागे बौद्धैरपि प्रामाण्यस्वीकारात् तत्रातिव्याप्तिवारणाय वेदत्वावच्छेदेन प्रामाण्यनिश्चयात्मकप्रामाण्यस्वीकार एव शिष्टलक्षणे प्रविष्ट इति भावः। प्रदर्शितानुमानलिङ्गघटकाचारेऽविगीतत्वं विशेषणत्वेन प्रविष्टम्। तस्य प्रयोजनमाह। **आचारे चेत्यादि। वेदानिषिद्धत्वमविगीतत्वमिति।** अत्राविगीतत्त्वं वेदानिषिद्धत्वरूपमित्यर्थः। आचारेऽस्याप्रवेशे तु समाप्त्युद्देश्यकशिष्टाचारविषयत्वमेव लिङ्गं भवेत्। कदाचिच्छिष्टा अपि भ्रमेण चैत्यवन्दनादिकमनुष्ठातुमर्हन्ति। तत्र शिष्टाचारे वेदबोधितसमाप्तिसाधनताकत्वरूपसाध्यस्याभावात् समाप्त्युद्देश्यकशिष्टाचारविषयत्वस्य सत्त्वेन व्यभिचारः स्यात्। अतस्तद्वारणार्थं शिष्टाचारेऽविगीतत्वं दत्तम्। एवञ्च तदाचारस्य शिष्टकृतत्वेऽपि तत्र वेदनिषिद्धत्वरूपाविगीतत्वाभावात् तद्घटितलिङ्गस्याप्यभावेन व्यभिचारो निरस्त इति बोध्यम्। न कुर्यान्निष्फलं कर्मेत्यादिश्रुत्या

निष्फलत्वेन चैत्यवन्दनादेर्विगीतत्वमिति भावः। लाघवमभिसन्धायाह। यद्वेत्यादि। अलौकिकविषयशिष्टाचारत्वमेव हेतुरिति। अत्र हेतावविगीतत्वं न पृथग्विशेषणत्वेन प्रविष्टमस्ति। पृथक्शिष्टत्वमपि न प्रविष्टमित्याह। शिष्टाचारत्वञ्च भ्रमाजन्याचारत्वमिति। तथा ह्यलौकिकविषयकभ्रमाजन्याचारविषयत्वमेव वेदबोधितसमाप्तिसाधनताकानुमाने लिङ्गम्। ननु नास्तिकाः कदाचिदास्तिका अपि कौतूहलनिवृत्तये स्तूपादिदर्शनार्थं चैत्यविहारं गच्छन्ति तद्वन्दनादिकमपि कुर्वन्तीति तत्तदाचारविषयीभूतकार्येषु लिङ्गस्य व्यभिचारश्चेन्नेत्याह। आस्तिकनास्तिकेत्यादि। अगम्यागमनमिति। निषिद्धा भूमिरगम्या। तत्र गमनमेवात्रागम्यागमनम्। तथाहि तत्तदाचारस्य भ्रमजन्यत्वान्न तेषु शिष्टाचारत्वमस्ति। एवञ्च शिष्टाचारत्वस्यैवासत्त्वान्न व्यभिचार इति भावः। तादृशाचारजनकज्ञानस्य भ्रमत्वं व्यवस्थापयति। बलवदनिष्टानुबन्धित्वादिष्टसाधनत्वाच्चेति। तथा हि इष्टसाधनत्वाल्लोकोऽगम्यागमनादौ प्रवर्तते। अगम्यागमनमिष्टसाधनमपि न बलवदनिष्टाजनकं निषिद्धत्वेन पापजनकत्वात्। प्रवृत्ताविष्टसाधनत्वज्ञानमिव बलवदनिष्टाजनकत्वज्ञानमपि कारणम्। अन्यथा मधुविषाभ्यां सम्पृक्तेऽन्नादौ क्षुधार्तानां प्रवृत्तिः प्रसज्यते। प्रकृते च प्रवृत्त्यर्थमगम्यागमनेऽपि बलवदनिष्टाजनकत्वज्ञानं स्वीकार्यम्। एवञ्च प्रवर्तकज्ञानस्यावश्यं भ्रमत्वेन तदाचारे भ्रमाजन्याचारत्वरूपं शिष्टाचारत्वमेव नास्तीति न तदादाय व्यभिचार इति बोध्यम्। अथ शिष्टाचारत्वस्य प्रदर्शितव्याख्यायामाचारस्यैव शिष्टत्व न तु लोकानां तदिति कथमास्तिके शिष्टपदव्यवहार इति चेदत्राह। लोके चेत्यादि। तथा हि पाषण्डान्त्यजाद्यतिरिक्तेषु वर्णिषु लोकानां शिष्टत्वव्यवहारो वेदप्रामाण्यस्वीकृतिनिबन्धनो भाक्त एवेति बोध्यम्। आस्तिकबौद्धयोरुभयोः शास्त्रज्ञानवत्त्वेऽपि प्रथमोक्ताः शिष्टा अन्त्या स्तु नेत्यत्र विनिगमकमाह। तैर्थिकत्वेऽपीत्यादि। आस्तिकानां वेदनिषिद्धानाचरणाद् बौद्धानाञ्च तत्करणाच्छिष्टाशिष्टत्वव्यवहार इति भावः। नन्वेवं यदि प्रामाण्याङ्गीकारिण एव शिष्टास्तदा वेदप्रामाण्यवादिनां कदाचाराणामपि शिष्टत्वं स्यात्, तद्व्यवहारप्रयोजकीभूतवेदप्रामाण्यवादित्वादिति चेदत्राह। यद्वेत्यादि। तथा च वेदप्रामाण्याभ्युपगमेऽपि कदाचाराणां वेदनिषिद्धकरणान्न तत्काले शिष्टत्वं स्यात्। तदानाचरणकाले तु तेषां शिष्टत्वमिष्टमेव। अतएवेति। शिष्टत्वस्वरूपे विशेषणरूपेण वेदप्रामाण्याभ्युपगन्तृत्वस्य प्रवेशादेवेत्यर्थः। तथा च यदा कश्चिद्बौद्धो वेदनिषिद्धं न समाचरति तत्समयेऽपि न स शिष्टस्तत्कालेऽपि तस्य वेदप्रामाण्यानभ्युपगन्तृत्वादिति भावः।

पूर्वं तावद् वेदप्रामाण्याभ्युपगन्तृत्वे सतीत्यादिना कालविशेषं प्रवेश्य शिष्टलक्षणमुक्तमिदानीं तदप्रवेशेन लाघवमभिमन्यमानानां केषाञ्चिल्लक्षणमुपस्थापयति **पापजनकत्वज्ञानं विनेत्यादि**। तथा हि पापजनकत्वज्ञानाभावविशिष्टं यद्वेदनिषिद्धकर्तृत्वं तादृशकर्तृत्वाभाववत्त्वं शिष्टत्वमित्यभिमानः। बौद्धानां चैत्यवन्दनादौ पापजनकत्वज्ञानं नास्ति, अपि तु वेदनिषिद्धं चैत्यवन्दनादिकं ते कुर्वन्ति। अतः पापजनकत्वज्ञानविरहविशिष्टं यद्वेदनिषिद्धकर्तृत्वं तस्य बौद्धेषु विद्यमानत्वेन तादृशविशिष्टवेदनिषिद्धकर्तृत्वाभाववत्त्वाभावान्नाशिष्टे लक्षणस्यातिव्याप्तिः। वेदनिषिद्धकर्तृत्वरूपविशेष्यांशस्य वर्णिष्वसत्त्वाल्लक्ष्ये लक्षणसमन्वयो बोध्यः। विशेष्यविशेषणयोरन्यतरस्यासत्त्वे विशिष्टाभावस्य सत्त्वाभ्युपगमादिति भावः। ननु वर्णिनां वेदनिषिद्धानाचरणे वेदनिषिद्धकर्तृत्वस्य यः सामान्यतोऽभावस्तद्वत्त्वमेव शिष्टत्वमस्तु किं प्रतियोग्यंशे पापजनकत्वज्ञानाभावस्य विशेषणत्वेन प्रवेशे प्रयोजनमिति चेन्न। वेदनिषिद्धकर्तृत्वसामान्याभाववत्त्वस्याव्याप्तिदोषदुष्टत्वात्। तथाहि चैत्यवन्दनादौ निषिद्धकर्मणि पापजनकत्वज्ञानसत्त्वेऽपि कदाचिदुत्कटरागविवशाः सन्तो वर्णिनस्तादृशं कर्म समाचरन्तीति दृश्यते। वेदनिषिद्धकर्तृत्वसामान्याभाववत्त्वस्य तत्रासत्त्वादव्याप्तिर्भवति। तन्निरासार्थं प्रतियोगिनि वेदनिषिद्धकर्तृत्वे पापजनकत्वज्ञानाभाववत्त्वरूपविशेषणमावश्यकम्। एवञ्च नाव्याप्तिः। तादृशनिषिद्धकर्मकर्तुरपि तदानीं पापजनकत्वज्ञानविरहरूपविशेषणांशस्यासत्त्वेन विशिष्टाभावस्य तत्रावश्यं सत्त्वात्। केवलस्य पापजनकत्वज्ञानाभाववत्त्वरूपविशेषणांशस्यापि न शिष्टत्वं सम्भवत्यव्याप्तत्वात्। शिष्टानां प्रायश एव निषिद्धकर्मणि पापजनकत्वज्ञानसत्त्वेन तदभाववत्त्वस्य तत्र विरहात्। एवं विशेषणांशस्याभावोऽपि न लक्षणमव्याप्तत्वादेव। तथा सति पापजनकत्वज्ञानाभावाभाववत्त्वमेव शिष्टत्वं स्यात्। येषां शिष्टानां चैत्यवन्दनादौ मौढ्यात् पापजनकत्वज्ञानं नास्ति निषिद्धाकर्तृषु तेषु पापजनकत्वज्ञानाभावाभाववत्त्वविरहादव्याप्तिर्बोध्या। सर्वेष्वेव निषिद्धकर्मसु सर्वेषामेव शिष्टानां पापजनकत्वज्ञानं स्यादेवेत्येवं नियमे प्रमाणाभावात्। लक्षणमिदं दूषयति। **तैर्थिकस्यापि कस्यचिदित्यादि**। अत्र तैर्थिकपदं शिष्टपरं बोध्यम्। मूर्खतया येषां चैत्यवन्दनादौ निषिद्धकर्मणि पापजनकत्वज्ञानं नास्ति अथ च बौद्धदृष्टान्तमनुसृत्य बौद्धानां मिथ्याप्रवादादेव वा ये चैत्यवन्दनं कुर्वन्ति, वेदप्रामाण्याभ्युपगन्तृषु तादृशशिष्टेषु पापजनकत्वज्ञानाभावावत्त्वस्य विशषणांशस्य वेदनिषिद्धकर्मकर्तृत्वरूपविशेष्यांशस्य च सत्त्वात्तेषु प्रदर्शितविशिष्टाभाववत्त्वरूपलक्षणस्यासत्त्वादव्याप्तिर्बोध्या।

यत्तु रागद्वेषहीनः शिष्टः स च सर्वज्ञत्वान्मन्वादिरेव अविगीततदाचारादेव वेदानुमानमिति। तन्न। एवं हि मन्वाद्याचारादर्शिनामाधुनिकानां मङ्गले प्रवृत्तिर्न स्यात्। आधुनिकानामाचारेण मन्वाद्याचारमनुमाय तेन च वेदमनुमाय बालः प्रवर्तत इति चेत्। तर्हि यादृशाचारेण मन्वाद्याचारानुमानं स एव वेदानुमापकोऽस्तु। किमित्यनुमितानुमानेन। आधुनिकानामपि शिष्टत्वेन व्यवह्रियमाणत्वाच्च। तथा च स्मृतिः।

यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
श्रुतिस्मृत्यविरोधेन सदाचारः स उच्यते॥

सर्वज्ञस्य मङ्गलाचारे मानाभावाच्च। मन्वादिप्रणीतस्मृतौ मङ्गलं दृश्यत इति चेत्। तन्न। स्मृतिकर्तुरसर्वज्ञत्वेऽपि वेदादर्थं प्रतीत्य स्मृतिप्रणयनसम्भवात्। यत्तु शिष्टाचारत्वेन कर्त्तव्यतैवानुमीयतां किं वेदेनेति तत्र वक्ष्यामः॥

इति श्रीमन्महामहोपाध्यायगङ्गेश्वरविरचितो मङ्गलवादः समाप्तः॥

रागाद्वेषहीनः शिष्ट इति। रागहीनत्वं द्वेषहीनत्वञ्चेति लक्षणद्वये तात्पर्यम्। उभयहीनत्वस्य रागहीनत्वविशिष्टद्वेषहीनत्वस्य वा लक्षणत्वे प्रयोजनाभावात्। अत्र हीनत्वस्यात्यन्ताभावत्वात्मकत्वे रागात्यन्ताभाववत्त्वं द्वेषात्यन्ताभाववत्त्वं वा शिष्टत्वं स्यात्। तच्च न सम्भवति पाषाणाद्यचेतनपदार्थानामपि तद्वत्त्वेन शिष्टत्वापत्तेः। न चेष्टापत्तिरिति वाच्यं मनुष्येष्वेव केषुचित्तत्पदस्य व्यवहारात्। रागात्यन्ताभाववत्त्वस्य हीनपदार्थत्वेऽत्यन्ताभावस्याव्याप्यवृत्तितया घटपटाद्यवच्छेदेन नास्तिकाद्यात्मन्यपि तस्य सत्त्वेनातिव्याप्तिः स्यात्। अतस्तद्वारणार्थं हीनपदमत्र ध्वंसार्थे प्रयुक्तमिति बोध्यम्। एवञ्च नास्तिकादीनां रागादिसत्त्वेन तद्ध्वंसविरहान्न तेष्वतिव्याप्तिः। एवं ध्वंसस्य प्रतियोगिसमवायिदेशे वृत्तित्वनियमेन पाषाणाद्यचेतनपदार्थानां रागाद्यसमवायित्वान्न वा तेषु रागध्वंसवत्त्वरूपशिष्टलक्षणस्यातिव्याप्तिरित्यपि बोध्यम्। नन्वेवमपि राग

विशेष्य द्वेषविशेषस्य वा यो यो ध्वंसस्तद्वत्त्वस्यावश्यं नास्तिकबौद्धयोः सत्त्वेन तत्रातिव्याप्तिस्तदवस्थैवेति चेन्न। आत्यन्तिकरागध्वंसवत्त्वस्य वा तादृशद्वेषध्वंसस्य वा शिष्टलक्षणत्वे तात्पर्यात्। एवञ्च न पूर्वोक्तातिव्याप्तिः। नास्तिकादिषु रागविशेषस्य ध्वंसवत्त्वेऽपि तद्ध्वंसस्यानात्यन्तिकत्वेनात्यन्तिकरागध्वंसस्य तत्रासत्त्वात्। मिथ्याज्ञान-विशिष्टान्यत्वमेव रागध्वंसस्यात्यन्तिकत्वम्। वैशिष्ट्यञ्चैककाला-वच्छेदेनैकात्मवृत्तिरूपं बोध्यम्। नन्वेवं साधारणशिष्टेषु रागविशेषस्य ध्वंससत्त्वेऽपि तादृशध्वंसस्य मिथ्याज्ञानकालीनत्वेनात्यन्तिकत्वाभावात् तादृशध्वंसवत्त्वं तत्राव्याप्तमिति चेन्न। एतन्मते ज्ञानिनामेव शिष्टत्वाभ्युप-गमात्। रागरहितमन्वादीनां चरमरागध्वंसस्य मिथ्याज्ञानासमानकालीन-त्वेनात्यन्तिकत्वात्तादृशध्वंसवत्त्वस्य तत्रैव स्वीकारात्। अविगीतात् तेषा-माचारादेव मङ्गलविधायकश्रुत्यनुमानमिति भावः। वेदबोधितकर्तव्यताकत्वस्या-भाववति भोजनादातिव्याप्तिवारणायाचारेऽविगीतत्वं विशेषणम्। एतन्मतं दूषयति। मन्वादीनामेव सर्वज्ञकल्पानां शिष्टत्वे तदाचाराणामाधुनि-कैरज्ञातत्वेन तादृशाचारलिङ्गेनाधुनिकानां मङ्गलविधायकवेदकल्पनाया असम्भवान्न तादृशं शिष्टत्वं प्रकृतोपयोगीति ध्येयम्। नन्वेवमाधुनिकाना-मविगीतेन मङ्गलाचारेण मन्वादीनामाचारोऽनुमीयेत तेन चानुमितेन मन्वादि-शिष्टाचारेण मङ्गलविधायकश्रुतेरनुमानं स्यात् तथाच वेदबोधितत्व-ज्ञानादाधुनिका अपि मङ्गलाचरणे प्रवर्तेरन्निति चेन्नेत्याह। स एव वेदानुमाप-कोऽस्तु किमनुमितानुमानेनेति। स एवेति। आधुनिकानामविगीतालौकिकाचार इति तदर्थः। तथा च मङ्गलं वेदबोधितकर्तव्यताकमविगीतालौकिकाचार-विषयत्वादित्याधुनिकाचारानुमानप्रयोगो बोध्यः। अनुमितानुमानेनेति। आधुनिकतादृशाचारेणोनुमितो यो मन्वादिशिष्टानामाचारस्तल्लिङ्गकेन वेदानु-मानेनत्यर्थः। एतदिष्टमेवेति चेन्नेत्याह। आधुनिकानामपीत्यादि। तथा ह्या-त्यन्तिकरागध्वंसवत्त्वस्य शिष्टत्वे आधुनिकानां तदभावे शिष्टत्वव्यवहारो न भवितुमर्हति। व्यवह्रियन्ते च आधुनिका अपि शिष्टत्वेन लोकैः। अतः शिष्टस्य तादृशलक्षणमयुक्तमिति भावः। आधुनिकानामाचारस्य शिष्टाचारत्वे प्रमाणमाह। तथा च स्मृतिरित्यादि। यस्त्वित्यादि। शिष्टाचारत्वेनेति। समाप्त्युद्देश्यकशिष्टाचारत्वेनेत्यर्थः। अत्र पूर्वोक्तं भ्रमाजन्यत्वमेवाचारगतं शिष्टत्वं बोध्यम्। कर्तव्यतैवानुमीयतामिति। तथा च कर्तव्यताज्ञानादेव मङ्गले प्रवृत्तिसम्भवेऽलं मङ्गलविधायकानुमानेनेति शङ्कार्थः। मङ्गलस्य कर्तव्यत्वानमाने प्रयोगस्तु मङ्गलमिष्टसाधनत्वे सति कृतिसाध्यमविगीता-

लौकिकशिष्टाचारविषयत्वाद् यागादिवदित्येवमाकारको बोध्यः। तत्र वक्ष्याम इति। तथा ह्यविगीतालौकिकशिष्टाचारविषयत्वस्य कर्तव्यताव्याप्यत्वनिश्चयं प्रति वेदबोधितत्वे तद्व्यापकत्वज्ञानमवश्यमपेक्षितमस्ति। तथा च कर्तव्यताव्याप्यत्वज्ञानहेतुत्वेन वेदबोधितत्वव्याप्यत्वज्ञानस्य तत्पूर्ववर्तित्वादविगीतशिष्टाचारविषयत्वेन मङ्गलस्य वेदबोधितत्वानुमानमावश्यकमिति शब्दखण्डे उच्छन्नप्रच्छन्नवादे आलोचयिष्याम इत्यर्थः। समाप्ता चेयं 'प्रभा'नाम्नी मङ्गलवादसमीक्षा। इति शम्।

खद्वयग्रहचन्द्राङ्के बिभ्रत् पाशुपतं महः।
दाक्षिण्यो वैदिको विप्रो गौरीनाथः प्रभासुतः॥

—o—

BIBLIOTHECA INDICA—A COLLECTION OF ORIENTAL WORKS

# MAṄGALAVĀDA

*By*

GAṄGEŚA UPĀDHYĀYA

*Edited By*

GAURINATH ŚĀSTRĪ

With an original Sanskrit Commentary, Prabhā




THE ASIATIC SOCIETY
1979